तस्य निर्ग्रन्थस्यात्मद्वितीयस्य वा आत्मतृतीयस्य वा रात्रौ वा विकाले वा बहिर्विचार भूमिं वा विहार भूमिं वा निष्क्रमितुं वा प्रवेष्टुं वेति सूत्र समासार्थः ॥ ४६ ॥

मूल—नो कप्पइ निग्गंथीए एगाणियाए राओ वा वियाले वा वहिया वियारभूमिं वा विहारभूमिं वा निक्खमित्तए वा पविसित्तए वा। कप्पइ से अप्प विइयाए वा अप्पतइयाए वा अप्प चउत्थीए वा राओ वा वियाले वा वहिया वियार भूमिं वा विहार भूमिं वा निक्खमित्तए वा पविसित्तए वा ॥ ५० ॥

टीका—अस्य सूत्रस्य व्याख्या प्राग्वत् , नवरं केवलं प्रमाणे निर्ग्रन्थेभ्यो निर्ग्रन्थीनां नानात्वम्। निर्ग्रन्थानां द्वयोस्त्रयाणां वा निर्गन्तुं कल्पते। निर्ग्रन्थीनान्तु द्वयोस्तिसृणां चतसृणां वा इत्ययं संख्याकृतो विशेषः। ये च स्तेनाऽऽरक्षिकाद्यो दोषाः पूर्व सूत्रे यतीनामेकाकिनिर्गमने प्रोक्ताः। त एवार्याणामपि सविशेषतरास्तरुणाद्युपद्रवसहिता मन्तव्याः ॥ ५० ॥

मूल—कप्पइ निग्गंथाण वा निग्गंथीण वा पुरत्थिमेणं जाव अंगमगहाओ एत्तए, दक्खिणेणं जाव कोसंवीओ एत्तए, पच्चत्थिमेणं जाव थूणा विसयाओ एत्तए, उत्तरेणं जाव कुणाला विसयाओ एत्तए, एताव ताव कप्पइ। एताव ताव आरिए खेत्ते। णो से कप्पइ एत्तोवाहिं। तेण परं जत्थ नाण दंसण चरित्ताइं उस्सप्पंतित्तिवेमि ॥ ५१ ॥ कप्पे पढमो उद्देसो।

टीका—कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा पूर्वस्यां दिशि यावदङ्गमगधान् एतुं–विहर्तुम्। अङ्गो नाम चम्पा प्रतिबद्धो जनपदः। मगधो राजगृह प्रतिबद्धोजनपदः। दक्षिणस्यां दिशि यावत् कौशाम्बीमेतुम्। प्रतीच्यां दिशि स्थूणाविषयंयावदेतुम्। उत्तरस्यां दिशि कुणाला विषयं यावदेतुम्। [ सूत्रे पूर्व दक्षिणादिपदेभ्यस्तृतीया निर्देशो लिङ्गव्यत्ययश्च प्राकृतत्वात् ] एतावत् तावत् क्षेत्रमवधीकृत्य विहर्तुं कल्पते। कुतः ? इत्याह–एतावत् तावत् यस्मादार्यक्षेत्रम्। नो 'से, तस्य निर्ग्रन्थस्य निर्ग्रन्थ्या वा कल्पते 'अतः, एवंविधादार्यक्षेत्राद्वहिर्विहर्तुम्। ततः परं वहिर्देशेषु "अपि

सम्प्रतिनृपति कालादारभ्य" यत्र ज्ञान दर्शन चारित्राणि 'उत्सर्पन्ति, स्फातिमासादयन्ति तत्र विहर्तव्यम्। 'इति, परिसमाप्तौ, ब्रवीमीति तीर्थकर गणधरोपदेशेन न तु स्वमनीषिकया इति सूत्रार्थः।

प्रथम उद्देशकः समाप्तः



# अथ द्वितीय उद्देशः प्रारभ्यते-

मूल—"उवस्सयस्स अंतोवगडाए सालीणि वा वीहीणि वा मुग्गाणि वा मासाणि वा तिलाणि वा कुलत्थाणि वा गोधूमाणि वा जवाणि वा जवजवाणि वा उक्खित्ताणि वा विक्खित्ताणि वा विइकिन्नाणि वा विप्पकिन्नाणि वा, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए ॥१॥

टीका—उपाश्रयस्य या 'अन्तर्वगडा, वगडाया-अभ्यन्तरम्' तच्च प्रतिश्रयमध्यं वा स्यात् प्राङ्गणं वा। तत्र 'सालीणि व'त्ति शालिबीजानि वा, 'वीहीणिव' त्ति व्रीहिबीजानि वा, एवं मुद्ग-माष-तिल-कुलत्थ-गोधूम-[ यव ] यवयवैरपि तत्तद्बीजान्युच्यन्ते, यवयवाः-यव विशेषास्तद्बीजानि वा। एतानि बीजानि यत्रोपाश्रये उत्क्षिप्तानि वा विक्षिप्तानि वा, व्यतिकीर्णानि वा, विप्रकीर्णानि वा, तत्र नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा यथालन्दमपि वस्तुम्। इह यथालन्दं त्रिधा-जघन्यं मध्यममुत्कृष्टं च। यावता कालेन उदकार्द्रोहस्तः शुष्यति तज्जघन्यम्। पञ्चरात्रिन्दिवान्युत्कृष्टम्। तयोरपान्तराले सर्वमपि मध्यमम्। अत्र जघन्य मध्यमयोः सूत्रावतारः। अपि शब्दः सम्भावनायाम्। जघन्यमपि मध्यममपि वा यथालन्दं नो कल्पते वस्तुम्, किम्पुनरुत्कृष्टम्? इति भावः। अत्र चोत्क्षिप्तादीनि पदानि भाष्यगाथयैव व्याख्यास्यन्त इति नात्र व्याख्यातानीति सूत्रसंक्षेपार्थः ॥ १ ॥

मूल—अहपुण एवं जाणिज्जा-नो उक्खित्ताइं नो विक्खित्ताइं नो विइकिण्णाइं नो विप्पकिण्णाइं रासिकडाणि वा पुंजकडाणि वा भित्तिकडाणि वा कुलियाकडाणि वा लंछियाणि वा मुद्दियाणि वा पिहिताणि वा, कप्पइ निग्गंथाण वा निग्गंथीण वा हेमंत गिम्हासु वत्थए ॥ २ ॥

टीका-अथ पुनरेवं जानीयात्-'तानिशाल्यादीनिबीजानि तत्रोपाश्रये नो उत्क्षिप्तानि, नो विक्षिप्तानि, नो विकीर्णानि, नो विप्रकीर्णानि, किन्तु राशीकृतानि वा, पुञ्जीकृतानि वा, भित्तिकृतानि वा, कुलिकाकृतानि वा, लाञ्छितानि वा, मुद्रितानि वा पिहितानि वा, तत एवं कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा, हेमन्त-ग्रीष्मेषु वस्तुमिति सूत्र संक्षेपार्थः ॥ २ ॥

मूल—अहपुण एवं जाणिज्जा–नो रासिकडाइं नो पुंजकडाइं नो भित्तिकडाइं नो कुलियकडाइं कोट्ठाउत्ताणि वा पल्लाउत्ताणि वा मंचाउ-त्ताणि वा माला उत्ताणि वा ओलित्ताणि वा लित्ताणि वा पिहियाणि वा लंछियाणि वा मुद्दियाणि वा कप्पइ निग्गंथाण वा निग्गंथीण वा वासावासं वत्थए ॥ ३ ॥

टीका-अथ पुनरेवं जानीयात्-नो राशीकृतानि नो पुञ्जीकृतानि नो भित्तिकृतानि नो कुलिकाकृतानि, कोष्ठागुप्तानि वा पल्यागुप्तानि वा, मञ्चा गुप्तानि वा, माला-गुप्तानि वा अवलिप्तानि वा लिप्तानि वा पिहितानि वा लाञ्छितानि वा मुद्रितानि वा। तत्र कोष्ठे-कुशूले आगुप्तानि-प्रक्षिप्यरक्षितानि कोष्ठाऽऽगुप्तानि । एवमुत्तर-त्रापि भावनीयम् । नवरं-'पल्यं-वंशकटकादिकृतो धान्याऽऽधारविशेषः, मञ्चः-स्थूणानामुपरिस्थापित वंशकादिमयो लोकप्रसिद्धः, मालकः-गृहस्योपरितनोभागः, 'अवलिप्तानि, नाम द्वारदेशे पिधानेन सह गोमयादिना कृतोपलेपानि, लिप्तानि-मृत्तिकया सर्वतः खरण्टितानि, पिहितानि-स्थगितानि 'लाञ्छितानि-रेखाऽक्षरा-दिभिः कृतलाञ्छनानिमुद्रितानि, मृत्तिकादिमुद्रायुक्तानि । एवं विधेषु धान्येषु कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा वर्षावासं वस्तुमिति सूत्रार्थः ॥ ३ ॥

मूल—"उवस्सयस्स अंतोवगडाए सुरावियडकुंभे वा सोवीरय वियड-कुंभे वा उवनिक्खित्ते सिया, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए । हुरत्था य उवस्सयं पडिलेहमाणे नो लभेज्जा, एवं से कप्पइ एगरायं वा दुरायं वा वत्थए । जे तत्थ एगरायाओ वा दुरायाओ वा परंवसइ से संतरा छेए वा परिहारे वा ॥ ४ ॥

टीका-सुराविकटं पिष्टनिष्पन्नम्, सौवीरक विकटंतु-पिष्टवर्ज्जैर्गुडादिद्रव्यैर्निष्पन्नम्। ततः सुरा विकटकुम्भो वा सौवीरक विकटकुम्भो वा यत्रोपाश्रयस्याऽन्तर्वगडायामु-

पनिक्षिप्तः स्यात्-तत्र नोकल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा यथालन्दमपिकालं वस्तुम् 'हुरत्था-य, त्ति देशीपदं बहिरर्थाभिधायकम् । च शब्दो वाक्यभेदद्योतकः, ततोऽयमर्थः-अथ बहिरन्योपाश्रयं प्रत्युपेक्षमाणोऽपि नो लभेत, ततएवं "से" तस्य साधोः कल्पते एकरात्रं वा द्विरात्रं वा तत्र वस्तुम् । यस्तत्रैकरात्राद्वा द्विरात्राद्वा 'परम्, ऊर्द्ध्व वसति 'से' तस्य संयतस्य, स्वान्तरात, स्वकृतं यदन्तरं-त्रिरात्र-चतूरात्रादिकालावस्थानरूपं तस्मात् 'छेदो' वा पञ्चरात्रिन्दिवादिः, 'परिहारो, वा मासलघुकादिस्तपोविशेषो भवतीति सूत्रार्थः ॥ ४ ॥

मूल—उवस्सयस्स अंतोवगडाए सीओदग वियडकुंभे वा उसिणोदग वियडकुंभे वा उवनिक्खित्ते सिया, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए । हुरत्था य उवस्सयं पडिलेहमाणे नो लभेज्जा, एवं से कप्पइ एगरायं वा दुरायं वा वत्थए । जे तत्थ एगरायाओ वा दुरायाओ वा परं वसइ से संतरा छेए वा परिहारे वा ॥ ५ ॥

टीका-अस्य व्याख्या पूर्ववत्, नवरं-विकृतं-शीतोष्णादि शस्त्रेण विकारं प्रापितं, प्राशुकीकृतमित्यर्थः । शीतोदकं च तद् विकृतं च शीतोदक विकृतं तस्य कुम्भः-घटः । एवमुष्णोदक विकृतकुम्भोऽपि ॥ ५ ॥

मूल—उवस्सयस्स अंतोवगडाए सव्वराइए जोई झियाएज्जा, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए । हुरत्था य उवस्सयं पडिलेहमाणे नो लभेज्जा, एवं से कप्पइ एगरायं वा दुरायं वा वत्थए । जे तत्थ एगरायाओ वा दुरायाओ वा परं वसइ से संतरा छेए वा परिहारे वा ॥ ६ ॥

टीका-व्याख्या प्रागवत्, नवरं सार्वरात्रिकं 'ज्योतिः, अग्निर्यत्रोपाश्रये 'ध्यायेत', धातूनामनेकार्थत्वात् प्रज्वलेत्, तत्र साधु साध्वीनां वस्तुं न कल्पते ॥ ६ ॥

मूल—उवस्सयस्स अंतोवगडाए सव्वराइए पईवे दिप्पेज्जा, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए । हुरत्था य उवस्सयं पडिलेहमाणे नो लभेज्जा, एवं से कप्पइ एगरायं वा दुरायं वा वत्थए । जे तत्थ परं एगरायाओ वा दुरायाओ वा वसइ से संतरा छेए वा परिहारे वा ॥ ७ ॥

टीका-व्याख्यानं ज्योतिःसूत्रवत् ॥ ७ ॥

मूल—उवस्सयस्स अंतोवगडाए पिंडए वा लोयए वा खीरे वा दहिं वा नवणीए वा सप्पि वा तेल्ले वा फाणियं वा पूवे वा सक्कुली वा सिहरिणी वा उक्खित्ताणि वा विक्खित्ताणि वा विइकिन्नाणि वा विप्पइन्नाणि वा, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए॥८॥

टीका-उपाश्रयस्यान्तर्वगडायां पिण्डको वा, लोचकं वा, क्षीरं वा, दधि वा, नवनीतं वा, सर्पिर्वा, तैलं वा, फाणित्तं वा, पूपं वा, शष्कुलिका वा, शिखरिणी वा, एतान्युत्क्षिप्तानि वा, विक्षिप्तानि वा, व्यतिकीर्णानि वा, विप्रकीर्णानि वा भवेयुः, नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा यथालन्दमपि वस्तुमिति-सूत्रार्थः ॥ ८ ॥

मूल—अह पुण एवं जाणेज्जा—'नो उक्खित्ताइं नो विक्खित्ताइं नो विइकिण्णाइं नो विप्पकिण्णाइं रासिकडाणि वा पुंजकडाणि वा भित्तिकडाणि वा कुलिया कडाणि वा लंछियाणि वा मुद्दियाणि वा पिहियाणि वा कप्पइ निग्गंथाण वा निग्गंथीण वा हेमंत गिम्हासु वत्थए ॥ ९ ॥

टीका-अस्य व्याख्या प्रागुक्त, नवरं यत्र पिण्डादीनि राशीकृतादिरूपाणि तत्र गीतार्थानां कल्पते ऋतुबद्धे वस्तुमिति सूत्रद्वयम् ॥ ९ ॥

मूल—अह पुण एवं जाणिज्जा—'नो रासिकडाइं जाव नो भित्तिकडाइं कोट्ठाउत्ताणि वा पल्लाउत्ताणि वा मंचाउत्ताणि वा मालाउत्ताणि वा ओलित्ताणि वा विलित्ताणि वा कुंभिउत्ताणि वा करभिउत्ताणि वा लंछियाणि वा मुद्दियाणि वा पिहियाणि वा कप्पइ निग्गंथाण वा निग्गंथीण वा वासावासं वत्थए ॥ १० ॥

टीका-अस्य व्याख्या प्रागुवत्, नवरं-कुम्भी-मुखाऽऽकारा कोष्टिका, करभी-घट संस्थान संस्थिता, तयोरागुप्तानि-प्रक्षिप्य रक्षितानि कुम्भ्या गुप्तानि, करभ्या गुप्तानि वा ॥ १० ॥

मूल—नो कप्पइ निग्गंथीणं अहे आगमणगिहंसि वा वियडगिहंसि वा वंसीमूलंसि वा रुक्खमूलंसिवा अब्भावगासियंसि वा वत्थए ॥ ११ ॥

टीका-इह निर्ग्रन्थ निर्ग्रन्थीनां सामान्यतः सदोषा उपाश्रया उक्ताः । अथ केवलानामेव निर्ग्रन्थीनामभिधीयन्ते, इत्यनेन सम्बन्धेनायातस्यास्य व्याख्या-अधः

शब्द इह अत्रशब्दार्थे। पथिकादीनामागमनेनोपेतं तदर्थं वा गृहमागमनगृहम्। विवृतम्-अनावृतं गृहं विवृतगृहम्। वंसीमूलं नाम-गृहाद् बहिः स्थितमलन्दकादिकम्। वृक्षमूलं तु-वृक्षस्य-सहकारादेर्मूलम्-अधोभागः। अभ्राकाशमाकाशमुच्यते। एतेषु प्रतिश्रयेषु-निर्ग्रन्थीनां वस्तुं न कल्पते, इति सूत्र संक्षेपार्थः॥ ११॥

मूल—कप्पइ निग्गंथाणं अहे आगमणगिहंसि वा वियडगिहंसि वा वंसीमूलंसि वा रुक्खमूलंसि वा अब्भावगासियंसि वा वत्थए। १२॥

टीका-अस्य प्राग्वद् व्याख्या॥ १२॥

मूल—एगे सागारिए पारिहारिए-दो तिन्नि चत्तारि पंच सागारिया पारिहारिया, एगं तत्थ कप्पागं ठवयित्ता अवसेसे निव्विसेज्जा॥ १३॥

टीका-एकः सागारिकः-वसतिस्वामी परिहारं-परित्यागमर्हतीति व्युत्पत्त्या पारिहारिकः, भिक्षाग्रहणे परिहर्तव्य इत्यर्थः। यथा चैकः सागारिकः पारिहारिकः तथा द्वौ त्रयश्चत्वारः पञ्चसागारिकाः पारिहारिकाः, न तेषांवहूनामपि गृहेषु प्रवेष्टव्यमितिभावः। अथ सूत्रेणैव सूत्रमपवदति-एगं तत्थ कप्पागं, इत्यादि। बहुजनसाधारणे देवकुलादौ स्थिताः 'तत्र, तेषु बहुषु सागारिकेषु मध्ये येन सागारिकतया स्थापितेन शेषगृहेषु प्रवेष्टुं कल्पते, तमेकं कल्पकं स्थापयित्वा शेषेषु सागारिककुलेषु निर्विशेयुः-प्रविशेयुरिति सूत्र संक्षेपार्थः॥ १३॥

मूल—नो कप्पइ निग्गंथाण वा निग्गंथीण वा सागारियपिंडं बहिया अनीहडं असंसट्ठं वा संसट्ठं वा पडिग्गाहित्तए॥ १४॥

टीका-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा सागारिक पिण्डं बहिर्वाटकात् अनिर्हृतम्, अनिष्क्रामितम् 'असंसृष्टं' वा अन्यदीय पिण्डैः सहाऽऽमीलितं, संसृष्टं वा अन्यदीयपिण्डैः समं मीलितं प्रतिग्रहीतुमिति सूत्रार्थः॥ १४॥

मूल—"नो कप्पइ निग्गंथाण वा निग्गंथीण वा सागारियपिंडं बहिया नीहडं असंसट्ठं पडिग्गाहित्तए। कप्पइ निग्गंथाण वा निग्गंथीण वा सागारियपिंडं बहिया नीहडं संसट्ठं पडिग्गाहित्तए॥ १५॥

टीका-अस्य व्याख्या प्राग्वत्। नवरं सागारिक पिण्डो वाटकाद् बहिर्निष्क्रामितोऽपि 'असंसृष्टः' अन्यपिण्डैः सममसीलितो न कल्पते संसृष्टस्तु कल्पते इति।

मूल—"जो खलु निग्गंथो वा निग्गंथी वा सागारियपिंडं बहिया

नीहडं असंसट्ठं संसट्ठं करेइ, करेंतं वा साइज्जइ, से दुहओ वीइक्कममाणे आवज्जइ चाउम्मासिअं परिहारट्ठाणं अणुग्घाइयं ॥ १६ ॥

टीका–यः खलु निर्ग्रन्थो निर्ग्रन्थी वा सागारिक पिण्डं बहिर्निर्गतमसंसृष्टं संसृष्टं करोति कुर्वन्तं वा स्वादयति–कारयति कुर्वन्तमनुमन्यते वेत्यर्थः, स 'द्विधा, लौकिक लोकोत्तरिकभेदाद् द्विप्रकारां मर्यादां व्यतिक्रामन् आपद्यते चातुर्मासिकं परिहारस्थानमनुद्घातिकम्, चतुरो गुरुमासानित्यर्थः । एष सूत्र संक्षेपार्थः ॥ १६ ॥

मूल—"सागारियस्स आहडिया सागारिएण पडिग्गहिया, तम्हा दावए नो से कप्पइ पडिग्गाहित्तए । सागारियस्स आहडिया सागारिएण अप्पडिग्गहिया, तम्हा दावए एवं से कप्पइ पडिग्गाहित्तए ॥ १७ ॥

टीका–'आहृतिका, प्रहेणकं सा सागारिकस्य गृहे कुतोऽपि गृहान्तरादागता, सा च सागारिकेण 'प्रतिगृहीता, स्वीकृता 'ततः तस्या मध्यात् दद्यात्, नो 'से, तस्य साधोः कल्पते प्रतिग्रहीतुम् । सागारिकस्याहृतिका सागारिकेण 'अप्रतिगृहीता, न स्वीकृता तस्या मध्यात् दद्यादेवं 'से, तस्य साधोः कल्पते प्रतिग्रहीतुमिति सूत्र संक्षेपार्थः ॥ १७ ॥

मूल—"सागारियस्स नीहडिया परेण अपडिग्गहिता, तम्हा दावए नो से कप्पइ पडिग्गाहित्तए । सागारियस्स नीहडिया परेण पडिग्गहिया, तम्हा दावए एवं से कप्पइ पडिग्गाहित्तए ॥ १८ ॥

टीका–'व्याख्या प्राग्वत्, नवरं सागारिक द्रव्यं यदन्यत्रनीयते सा निर्हृतिकेत्युच्यते । सा यस्य समीपे प्रेषिता तेनाऽप्रतिगृहीता न कल्पते प्रतिगृहीता तु कल्पते ॥ १८ ।'

मूल—"सागारियस्स अंसियाओ अविभत्ताओ अव्वोच्छिन्नाओ अव्वोगडाओ अनिज्जूढाओ, तम्हा दावए नो से कप्पइ पडिग्गाहित्तए । सागारियस्स अंसियाओ विभत्ताओ वोच्छिन्नाओ वोगडाओ निज्जूढाओ, तम्हा दावए एवं से कप्पइ पडिगाहित्तए ॥ १९ ॥

टीका–सागारिकस्य या अंशिका तस्या अन्येषामंशिकाभ्योऽविभक्ताया अव्यवच्छिन्नाया अव्याकृताया अनिर्गूढाया मध्यात् कश्चिद्भक्तपानं दद्यात्, नो से–तस्य साधोः कल्पते प्रतिग्रहीतुम् । सागारिकस्यांऽशिका विभक्ता व्यवच्छिन्ना व्याकृता

निर्गूढा च यस्माद् राशेर्भवति तस्माद् दद्याद्, एवं 'से, तस्य कल्पते प्रतिग्रहीतुमिति सूत्र संक्षेपार्थः ॥ १६ ॥

मूल—"सागारियस्स पूयाभत्ते उद्देसिए चेइए पाहुडियाए, सागारियस्स उवगरणजाए निट्ठिए निसट्ठे पाडिहारिए, तं सागारिओ देज्जा सागारियस्स परिजणो देज्जा, तम्हा दावए नो से कप्पइ पडिग्गाहित्तए॥२०॥

व्याख्या—सागारिकस्य ये पूज्याः-स्वामिकलाचार्यादयः, तदर्थं भक्तम्-अशनादि पूज्यभक्तम्, तच्चोद्देशः-सङ्कल्पः तेन निर्वृत्तमौद्देशिकम्, तानेव पूज्यानुद्दिश्य कृतमित्यर्थः। ततस्तेषामेव प्राभृतिकायां चेतितं ढौकनीकृतम् उपनीतमितिभावः। तथा सागारिकस्य उपकरणजातं वस्त्र कम्बलादिकं पूज्यानामर्थाय 'निष्ठितम्, निष्पादितम्। ततः 'निसृष्टं', पूज्येभ्यः प्रदत्तम्। 'तच्च, भक्तमुपकरणं वा तेभ्यः प्रातिहारिकं दत्तम्, भुक्तावशेषं सदिदं भूयोऽप्यस्माकं प्रत्यर्पणीयमिति भावः। तद् एवं प्रकारं संयतानां सागारिको वा दद्यात्, सागारिकस्य परिजनो वा दद्यात् किंकल्पते? नवा? इत्याह-'तस्मात् पूज्यभक्तात् पूज्योपकरणाद्वा प्रातिहारिकाद् दद्यात्, परं न कल्पते प्रतिग्रहीतुमिति सूत्रार्थः ॥ २० ॥

मूल—"सागारियस्स पूयाभत्ते उद्देसिए चेइए जाव पाडिहारिए, तं नो सागारिओ देज्जा नो सागारियस्स परिजणो देज्जा, सागारियस्स पूया देज्जा, तम्हा दावए नो से कप्पइ पडिग्गाहित्तए ॥ २१ ॥

व्याख्या-प्रागवत् नवरम्-अत्र न सागारिको न वा सागारिकस्य परिजनोदद्यात् किन्तु सागारिकस्य 'पूज्यः, सम्बन्धि स्वाम्यादिर्दद्यात्, तथापि न कल्पते, प्रातिहारिकतया दत्तमिति कृत्वा सागारिक पिण्डत्वात् ॥ २१ ॥

मूल—"सागारियस्स पूयाभत्ते उद्देसिए चेइए पाहुडियाए सागारियस्स उवगरणजाए निट्ठिए निसट्ठे अपाडिहारिए तं सागारिओ देइ सागारियस्स परिजणोदेइ तम्हा दावए नो से कप्पइ पडिग्गाहित्तए ॥२२॥

टीका-अयमप्रातिहारिकतया सागारिक पिण्डो न भवति, परं सागारिकस्तत्परिजनो वा ददातीति कृत्वा प्रक्षेपकादि दोष सद्भावान्न कल्पते ॥ २२ ॥

मूल—"सागारियस्स पूयाभत्ते जाव अपाडिहारिए, तं नो सागारि-

ओदेइ, नो सागारियस्स परिजणो देइ सागारियस्स पूयादेइ, तम्हा दावए एवं से कप्पइ पडिगाहित्तए ॥ २३ ॥

टीका–अत्र सागारिकेणादृष्टं तत्पूज्योऽप्रातिहारिकं ददातीति कल्पते, परं द्वितीयपदे, नोत्सर्गतः ॥ २३ ॥

मूल—"कप्पइ निग्गंथाण वा निग्गंथीण वा इमाइं पंच वत्थाइं धारित्तए वा परिहरित्तए वा, तं जहा जंगिए भंगिए साणए पोत्तए तिरीडपट्टे नामं पंचमे ॥ २४ ॥

टीका–कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा इमानि पञ्चवस्त्राणि धारयितुं वा परिग्रहे धर्तुं परिहर्तुं वा परिभोक्तुम्। तद्यथा जङ्गमाः–त्रसाः, तदवयव निष्पन्नं जाङ्गमिकम्, सूत्रे प्राकृतत्वाद्–मकारलोपः, भङ्गा–अतसीतन्मयं भाङ्गिकम्, सन–सूत्रमयं सानकम्, पोतकं, कार्पासिकम्–तिरीटः–वृक्षविशेषस्तस्य यः पट्टो वल्कलक्षणस्तन्निष्पन्नं तिरीट पट्टकं नाम पञ्चमम्। एष सूत्र संक्षेपार्थः ॥ २४ ॥

मूल—"कप्पइ निग्गंथाण वा निग्गंथीण वा इमाइं पंच रयहरणाइं धारित्तए वा परिहरित्तए वा, तं जहा—उण्णिए उट्टिए साणए वच्चाचिप्पए मुंजचिप्पए नाम पंचमे ॥ २५ ॥ त्तिबेमि बिइओ उद्देसओ।

टीका–कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा इमानि पञ्चरजोहरणानि धारयितुं वा परिहर्तुं वा। 'तद्यथा, इति उपप्रदर्शनार्थः। औणिकम् ऊरणिकानामूर्णाभिर्निर्वृत्तम्, 'औष्ट्रिकं, उष्ट्ररोमभिर्निर्वृत्तम्, 'सानकं, सनवृक्ष वल्काद्जातम्, वच्चकः–तृणविशेषस्तस्य चिप्पकः–कुट्टितः–त्वग्रूपः तेन निष्पन्नं वच्चक चिप्पकम्, मुञ्जः–शरस्तम्बस्तस्य चिप्पकाद् जातं मुञ्जचिप्पकं नाम पञ्चममिति सूत्रार्थः ॥ २५ ॥

इति द्वितीयोद्देशकः



# अथ तृतीय उद्देशः

मूल—"नो कप्पइ निग्गंथाणं निग्गंथीणं उवस्सयंसि चिट्ठित्तए वा निसीइत्तए वा तुयट्टित्तए वा निद्दाइत्तए वा पयलाइत्तए वा असणं वा ४ आहारं आहारित्तए, उच्चारं वा पासवणं वा खेलं वा सिंघाणं वा परिट्ठवित्तए, सज्झायं वा करित्तए, झाणं वा झाइत्तए, काउस्सग्गं वा ठाणं वा ठाइत्तए ॥ १ ॥

टीका—"नो कल्पते निर्ग्रन्थानां निर्ग्रन्थीनामुपाश्रये स्थातुं वा निषत्तुं वा त्वग्वर्तयितुं वा निद्रायितुं वा प्रचलायितुं वा अशनं वा पानं वा खादिमं वा स्वादिमं वा चतुर्विधमप्याहारमाहर्त्तुम्, उच्चारं वा प्रस्रवणं वा खेलं वा सिंघाणं वा परिष्ठापयितुम्, स्वाध्यायं वा कर्तुम्, ध्यानं वा ध्यातुम्, कार्योत्सर्गं वा स्थानं स्थातुमिति सूत्रसंक्षेपार्थः ॥ १ ॥

मूल—नो कप्पइ निग्गंथीणं निग्गंथउवस्सयंसि चिट्ठित्तए वा जाव काउस्सग्गं वा ठाणं ठाइत्तए ॥ २ ॥

टीका—यथा निर्ग्रन्थानां निर्ग्रन्थ्युपाश्रये गमनादिकं कर्तुं न कल्पते तथा तासामपि निर्ग्रन्थीनां यति निलये निर्ग्रन्थोपाश्रये निष्कारणे गमनादिकं कर्तुं न कल्पते। [ एतदर्थप्रतिपादनार्थमिदंसूत्रमारभ्यते । अत्र च यत् प्रायश्चित दोषजालादिपूर्व सूत्रोक्तं 'यत्र' निष्कारणगमनादौ युज्यते तत्र तद् 'ज्ञेयं' स्वबुध्याऽभ्यूह्य ज्ञातव्यम् ] ॥ २ ॥

मूल—नो कप्पइ निग्गंथीणं सलोमाइं चम्माइं अहिट्ठित्तए ॥ ३ ॥

टीका--नो कल्पते निर्ग्रन्थीनां सलोमानि चर्माणि 'अधिष्ठातुं' निषदनादिना परिभोक्तुमिति सूत्रार्थः ॥ ३ ॥

मूल—कप्पइ निग्गंथाणं सलोमाइं चम्माइं अहिट्ठित्तए सेविय परिभुत्ते नो चेव णं अपरिभुत्ते, से विय पाडिहारिए नो चेव णं अप्पाडिहारिए, से वि य एगराइए नो चेव णं अणेगराइए ॥ ४ ॥

टीका--कल्पते निर्ग्रन्थानां सलोमानि चर्माणि 'अधिष्ठातुं' परिभोक्तुम्। तत्रापि यच्चर्म परिभुक्तं तदेव ग्राह्यं नापरिभुक्तम्। तदपि च प्रातिहारिकं नाप्रातिहारिकम् तदपि चैकरात्रिकं नैवानेकरात्रिकमिति सूत्रार्थः ॥ ४ ॥

मूल—नो कप्पइ निग्गंथाण वा निग्गंथीण वा कसिणाइं चम्माइं धारित्तए वा परिहरित्तए वा ॥ ५ ॥

टीका--नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा कृत्स्नानि वर्णप्रमाणादिभिः प्रतिपूर्णानि चर्माणि धारयितुं वा परिहर्तुं वेति सूत्रार्थः ॥ ५ ॥

मूल—कप्पइ निग्गंथाण वा निग्गंथीण वा अकसिणाइं चम्माइं धारित्तए वा परिहरित्तए वा ॥ ६ ॥

टीका--कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा [ अकृत्स्नानि ] चर्माणि धारयितुं वा परिहर्तुं वा इति सूत्रार्थः ॥ ६ ॥

मूल—नो कप्पइ निग्गंथाण वा निग्गंथीण वा कसिणाइं वत्थाइं धारित्तए वा परिहरित्तए वा। कप्पइ निग्गंथाण वा निग्गंथीण वा अकसिणाइं वत्थाइं धारित्तए वा परिहरित्तए वा ॥ ७ ॥

टीका--"नो कप्पइ' त्ति आर्षत्वादेकवचनम् नो कल्पन्ते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा कृत्स्नानि सकल कृत्स्नादि रूपाणि वस्त्राणि 'धारयितुं वा' परिग्रहे धर्तुं 'परिहर्तुं वा' परिभोक्तुम्, अकृत्स्नानि तु कल्पन्ते, इति सूत्रसंक्षेपार्थः ॥७॥

मूल—"नोकप्पइ निग्गंथाण वा निग्गंथीण वा अभिन्नाइं वत्थाइं धारित्तए वा परिहरित्तए वा ॥ ८ ॥

टीका--नोकल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा' अभिन्नानि, अच्छिन्नानि वस्त्राणि धारयितुं वा परिहर्तुं वेति ॥ ८ ॥

मूल—कप्पइ निग्गंथाण वा निग्गंथीण वा भिन्नाइं वत्थाइं धारित्तए वा परिहरित्तए वा ॥ ९ ॥

टीक—अस्य व्याख्या प्राग्वत्. (कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा भिन्नानि-छिन्नानि वस्त्राणि धर्तुं वा परिभोक्तुं वा) ॥ ९ ॥

मूल—नो कप्पइ निग्गंथाणं उग्गहणंतगं वा उग्गहपट्टगं वा धारित्तए वा परिहरित्तए वा ॥ १० ॥

टीका—नोकल्पते निर्ग्रन्थानाम् 'अवग्रहाऽनन्तकं वा' गुह्यदेशपिधान-वस्त्रम् 'अवग्रहपट्टकं वा' तस्यैवाच्छादकपट्टं धारयितुं वा परिहर्तुं वा इति सूत्र-संक्षेपार्थः । १० ॥

मूल—कप्पइ निग्गंथीणं उग्गहणंतगं वा उग्गहपट्टगं वा धारित्तए वा परिहरित्तए वा ॥ ११ ॥

टीका—अस्य व्याख्या प्राग्वत् ॥ ११ ॥

मूल—निग्गंथीए अ गाहावइकुलं पिंडवाय पडियाए अणुप्पविट्ठाए चेलट्ठे समुप्पज्जेज्जा, नो से कप्पइ अप्पणो नीसाए चेलं पडिग्गाहित्तए, कप्पइ से पवत्तिणि नीसाए चेलं पडिग्गाहित्तए। नो य से तत्थ पवत्तिणी सामाणा सिया जे तत्थ सामाणे आयरिए वा उवज्झाए वा पवित्ती वा थेरे वा गणी वा गणहरे वा गणावच्छेइए वा जं चऽन्नं पुरओ कट्टु विहरइ कप्पइ से तन्नीसाए चेलं पडिग्गाहित्तए ॥ १२ ॥

टीका—निर्ग्रन्थ्या गृहपतिकुलं पिण्डपात प्रतिज्ञया अनुप्रविष्टयाश्चेलेनाऽर्थः-प्रयोजनं चेलार्थः स समुत्पद्येत, नो से, तस्याः कल्पते आत्मनो निश्रया चेलं प्रति-ग्रहीतुम्, किन्तु कल्पते 'से' तस्याः प्रवर्तिनी निश्रया चेलं प्रतिग्रहीतुम् । अथ तत्र न प्रवर्तिनो 'सामाणा' सन्निहिता ततो यस्तत्राचार्यो वा उपाध्यायो वा प्रवर्ती वा स्थविरो वा गणीवा गणधरो वा गणावच्छेदको वा सन्निहितो भवेत् । 'गणी' गणा-धिपतिराचार्यः, 'गणधरः' संयतीपरिवर्तकः शेषाः सर्वेऽपि प्रतीताः । एतेषां निश्रया यं वा 'अन्यं' गीतार्थं साधुं पुरतः कृत्वा विहरति तन्निश्रया कल्पते 'से' तस्याश्चेलं प्रतिग्रहीतुमिति सूत्रसंक्षेपार्थः । १२ ॥

मूल—निग्गंथस्स तप्पढमयाए संपव्वयमाणस्स कप्पइ रयहरण गोच्छग पडिग्गहमायाए तिहिं कसिणेहिं वत्थेहिं आयाए संपव्वइत्तए। से अ पुव्वोवट्ठिए सिया एवं से नो कप्पइ रयहरण पडिग्गह गोच्छय मायाए तिहिय कसिणेहिं वत्थेहिं आयाए संपव्वइत्तए। कप्पइ से अहा, परिग्गहियाइं वत्थाइं गहाय आयाए संपव्वइत्तए॥ १३॥

टीका—निर्ग्रन्थस्य तत्प्रथमतया सम्-इति सम्यग्, प्रकर्षेण पुनरनङ्गीकार लक्षणेन व्रजतो-गृहवासान्निर्गच्छतः संप्रव्रजतः कल्पते रजोहरण गोच्छक-प्रतिग्रह-मादाय त्रिभिः कृत्स्नैर्वस्त्रैरात्मना सम्प्रव्रजितुम्। इह रजोहरण ग्रहणेन मध्यमोपधिः, गोच्छक ग्रहणेन जघन्योपधिः, प्रतिग्रहग्रहणेनोत्कृष्टोपधिः सर्वोगृहीतः, ततोऽयमर्थः—जघन्य मध्यमोत्कृष्टोपधि निष्पन्ना ये त्रयः कृत्स्नाः-प्रतिपूर्णा वस्त्र पात्र प्रत्यवताराः-स्तैरात्मना सहितैः प्रव्रज्या ग्रहीतुं कल्पते। 'से य' त्ति च शब्दोऽथ शब्दार्थः, अथाऽसौ प्रव्रज्याप्रतिपत्ता पूर्वम् उपस्थितः—दीक्षितः स्यात् ततो नो कल्पते 'से' तस्य पूर्वोपस्थितस्य रजोहरण गोच्छक प्रतिग्रहमादाय त्रिभिः कृत्स्नैर्वस्त्रैरात्मना सम्प्रव्रजितुम्। किन्तु कल्पते 'से' तस्य 'यथापरिगृहीतानि क्रीतकृतादिदोषरहितानि वस्त्राणि गृहीत्वा आत्मना संप्रव्रजितुमिति सूत्र संक्षेपार्थः॥ १३॥

मूल—निग्गंथीए णं तप्पढमयाए संपव्वयमाणीए कप्पइ से रयहरण—गोच्छग—पडिग्गहमायाए चउहिं कसिणेहिं वत्थेहिं आयाए संपव्वइत्तए। साय पुव्वोवट्ठिया सिया एवं से नो कप्पइ रयहरण गोच्छग पडिग्गह मायाए चउहिं कसिणेहिं वत्थेहिं आयाए संपव्वइत्तए कप्पइ से अहापरिग्गहिएहिं वत्थेहिं आयाए संपव्वइत्तए॥ १४॥

टीका-अस्य व्याख्या प्राग्वत्, नवरं निर्ग्रन्थ्याश्चतुर्भिः प्रत्यवतारैः सहितायाः प्रव्रजितुं कल्पते इति विशेषः॥ १४॥

मूल—नो कप्पइ निग्गंथाण वा निग्गंथीण वा पढमसमोसरणुद्देसपत्ताइं चेलाइं पडिग्गाहित्तए। कप्पइ निग्गंथाण वा निग्गंथीण वा दोच्च समोसरणुद्देसपत्ताइं चेलाइं पडिग्गाहित्तए॥ १५॥

टीका-"नो कप्पइ"त्ति आर्षत्वादेकवचनम्-नो कल्पन्ते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा प्रथमसमवसरणे-वर्षाकाले उद्देश:—क्षेत्रकालविभागस्तं प्राप्तानि प्रथम समवसृ-

णोद्देश प्राप्तानि 'चेलानि' वस्त्राणि प्रतिग्रहीतुम्। किमुक्तं भवति ?--इह साधवो यत्र वर्षावासं चिकीर्षवस्तत् क्षेत्रं यावद् नाद्यापि प्राप्नुवन्ति, प्राप्ता वा परं नाद्याप्याषाढ पूर्णिमा लगति, तावत्कल्पन्ते वस्त्राणि प्रतिग्रहीतुम्। अथ वर्षावास प्रायोग्यं क्षेत्रं प्राप्ताः, आषाढ पूर्णिमा च सञ्जाता तत इयन्तं क्षेत्र कालविभागं प्राप्ताणि वस्त्राणि न कल्पन्ते। द्वितीय समवसरणोद्देशप्राप्तानि तु कल्पन्ते। इति सूत्र-संक्षेपार्थः ॥ १५ ॥

**मूल---कप्पइ निग्गंथाण वा निग्गंथीण वा अहाराइणियाए चेलाइं पडिग्गाहित्तए ॥ १६ ॥**

टीका--कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा यथारात्निकं यो यो रात्निकः-भावरत्नैरधिकस्तदनतिक्रमेण चेलानि प्रतिग्रहीतुमिति सूत्रार्थः ॥ १६ ॥

**मूल--कप्पइ निग्गंथाण वा निग्गंथीण वा अहाराइणियाए सेज्जासंथारए पडिग्गाहित्तए ॥ १७ ॥**

टीका--कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा यथारत्नाधिकं शय्यासंस्तारकान् प्रतिग्रहीतुमिति सूत्र संक्षेपार्थः ॥ १७ ॥

**मूल--कप्पइ निग्गंथाण वा निग्गंथीण वा अहाराइणियाए किइकम्मं करित्तए ॥ १८ ॥**

टीका-- कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा यथारात्निकं, यो यो रत्नाधिकस्त-दनतिक्रमेण कृति कर्म कर्तुमिति सूत्र संक्षेपार्थः ॥ १८ ॥

**मूल--नो कप्पति निग्गंथाण वा निग्गंथीण वा अंतरगिहंसि चिट्ठित्तए वा निसीइत्तए वा जाव काउस्सग्गं वा ठाणं ठाइत्तए। अह पुण एवं जाणिज्जा--वाहिए, जराजुण्णे तवस्सी दुब्बले किलंते मुच्छिज्ज वा पवडिज्ज वा, एवं से कप्पइ अंतरगिहंसि चिट्ठित्तए वा जाव ठाणं ठाइत्तए॥ १९ ॥**

टीका--नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'अन्तरगृहे' गृहस्य गृहयोर्वा अन्तराले [ राजदन्तादित्वाद् आर्षत्वाद्वा अन्तर शब्दस्य पूर्वनिपातः ] स्थातुं वा निषत्तुं वा यावत्करणात् त्वग्वर्तयितुं वा, निद्रायितुं वा, प्रचलायितुं वा, अशनं वा, पानं वा, खादिमं वा, स्वादिमं वा ( आहारम् ) आहर्तुम्। उच्चारं वा प्रस्रवणं वा खेलं वा सिङ्घानं वा परिष्ठापयितुम्, स्वाध्यायं वा कर्तुम्, ध्यानं वा ध्यातुम्,

"काउस्सग्गं" त्ति कायोत्सर्गलक्षणं वा स्थानं 'स्थातुं' कर्तुम्। सूत्रेणैवाऽपवादं दर्शयति-अथपुनरेवं जानीयात्-'वाहिए, इत्यादि व्याधितः-ग्लानः, जराजीर्णः--स्थविरः, 'तपस्वी' क्षपकः दुर्बलः-ग्लानत्वादधुनैवोत्थितोऽसमर्थ शरीरः, एतेषां मध्यादन्यतमस्तपसा भिक्षाटनेन वा क्लान्तः-परिश्रान्तः सन् मूर्च्छेद्वा प्रपतेद्वा, एवं कारणमुद्दिश्य कल्पते अन्तरगृहे स्थातुं वा यावत् कायोत्सर्गं वा कर्तुमिति सूत्रार्थः ॥ १६ ॥

**मूल-"नो कप्पति निग्गंथाण वा निग्गंथीण वा अंतरगिहंसि जाव चउगाहं वा पंचगाहं वा आइक्खित्तए वा विभावित्तए वा किट्टित्तए वा पवेइत्तए वा, नऽन्नत्थ एगणाएण वा एगवागरणेण वा एगगाहाए वा एग सिलोएण वा, से वि य ठिच्चा नो चेव णं अट्ठिच्चा ॥ २० ॥**

टीका--नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा अन्तर गृहे यावत् चतुर्गाथं वा पञ्चगाथं वा आख्यातुं वा विभावयितुं वा कीर्तयितुं वा प्रवेदयितुं वा। एतदेवापवदन्नाह-'नऽन्नत्थ' इत्यादि 'न कल्पते' इति योऽयं निषेधः स एकज्ञाताद्वा एक व्याकरणाद्वा एक गाथाया वा एक श्लोकाद्वा अन्यत्र मन्तव्यः। [ सूत्रे च पञ्चम्याः स्थाने तृतीया निर्देशः प्राकृतत्वात् ] तदपि च एक ज्ञातादि व्याख्यानं स्थित्वा कर्तव्यम्, नैव 'अस्थित्वा' भिक्षां पर्यटतोपविष्टेन वा इति सूत्रार्थः ॥ २० ॥

**मूल-"नो कप्पति निग्गंथाण वा निग्गंथीण वा अंतरगिहंसि इमाइं पंच महव्वयाइं सभावणाइं आइक्खित्तए वा विभावित्तए वा किट्टित्तए वा पवेयत्तए वा, नऽन्नत्थ एगनाएण वा जाव सिलोएण वा, से वि य ठिचा नो चेव णं अठिच्चा ॥ २१ ॥**

टीका---अस्य व्याख्या प्राग्वत्, नवरम् 'इमानि' स्वयमनुभूयमानानि पंच महाव्रतानि सभावनानि-प्रतिव्रतं भावना पंचक युक्तानि आख्यातुं वा, विभावयितुं वा कीर्तयितुं वा प्रवेदयितुं वा न कल्पन्ते। आख्यानं नाम-साधूनां पंचमहाव्रतानि पंचविंशतिभावनायुक्तानि षट्कायरक्षणसाराणि भवन्ति 'इति सामान्यकथनम्'। विभावनंतु प्राणातिपाताद्विरमणं यावद् परिग्रहाद्विरमणमिति। भावनास्तु--"इरियासमिए सयाजए० इत्यादि गाथोक्तस्वरूपाः। षट्कायास्तु-पृथिव्यादयः। कीर्तनंनाम--"या प्रथमव्रतरूपा अहिंसा सा भगवती सदेवमनुजाऽसुरस्य लोकस्य

पूज्या, द्वीपः, त्राणं शरणं गतिः, प्रतिष्ठेत्यादि, एवं सर्वेषामपि प्रश्नव्याकरणोक्तान्, गुणान् कीर्तयति। प्रवेदनं तु-महाव्रतानुपालनात् स्वर्गोऽपवर्गो वा प्राप्यते इति लाभकथनम् ) इति सूत्रार्थः ॥ २१ ॥

मूल-"नो कप्पति निग्गंथाण वा निग्गंथीण वा पाडिहारियं सिज्जा-संथारयं आयाए अपडिहट्टु संपव्वइत्तए ॥ २२ ॥

टीका—नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा प्रतिहरणं-प्रतिहारः-प्रत्यर्पणं तमर्हतीति प्रातिहारिकं, शय्याचसर्वाङ्गीणा, संस्तारकः-अर्द्धतृतीयहस्तमानः, शय्यासंस्तारकं तद् 'आदाय' गृहीत्वा कार्यसमाप्तौ 'अप्रतिहृत्य' प्रत्यर्पणमकृत्वा सम्प्रव्रजितु-ग्रामान्तरं विहर्तु मिति सूत्रार्थः ॥ २२ ॥

मूल-"नो कप्पइ निग्गंथाण वा निग्गंथीण वा सागारिय संतियं सेज्जासंथारयं आयाए अविकरणं कट्टु संपव्वइत्तए ॥ २३ ॥

टीका—नोकल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा सागारिकः-शय्यातरस्तस्य सत्कं शय्यासंस्तारकम् आदाय-गृहीत्वा 'अविकरणं कृत्वा, अविकरणं नाम-यत् साधुना करणंकृतम्-तृणानां प्रस्तरणं कम्बिकानां बन्धनं फलकस्यस्थापनम्, तद् अनपनीय संप्रव्रजितु विहर्तु मिति सूत्रार्थः ॥ २३ ॥

मूल-"इह खलु निग्गंथाण वा निग्गंथीण वा पाडिहारिए वा सागा-रियसंतिए वा सेज्जासंथारए विप्पणसिज्जा से य अणुगवेसियव्वे सिया, से अ अणुगवेस्समाणे लभेज्जा तस्सेव पडिदायव्वे सिया, से अ अणुगवेस-माणे नो लभिज्जा एवं से कप्पइ दोच्चंपि उग्गहं अणुन्नवित्ता परिहारं परिहरित्तए ॥ २४ ॥

टीका—इह अस्मिन् मौनीन्द्रे प्रवचने स्थितानां 'खलु' वाक्यालङ्कारे, निर्ग्रन्थानां वा निर्ग्रन्थीनां वा प्रातिहारिको वा सागारिकसत्को वा शय्यासंस्तारकः 'विप्रणश्येत्' विविधैः प्रकारैः प्रकर्षेण रक्ष्यमाणोऽपि नश्येत्, सच 'अनुगवेषयितव्यः' विप्रणाशान-न्तरम् पृष्ठत एव गवेषयितव्यः। स्याद्-भवेत् सचानुगवेष्यमाणो लभ्येत तस्यैव संस्तारक स्वामिनः प्रतिदातव्यः-प्रत्यर्पणीयः। स्यात् स चानुगवेष्यमाणो न लभ्येत तत एवं 'से' तस्य कल्पते 'द्वितीयमप्यवग्रहमनुज्ञाप्य' एकं तावत्प्रथमं यदा गृहीत-स्तदाऽनुज्ञापितः, ततो विप्रणष्टः सन् गवेष्यमाणोऽपि यदा न लब्धः, तदा संस्तारक

स्वामिनः कथिते सति यदसावन्यं संस्तारकं ददाति, यद्वा स एव संस्तारक स्वामिना मृग्यमाणोऽलब्धः, ततस्तद्विषयं द्वितीयमवग्रहमनुज्ञाप्य 'परिहारं' धारणा-परिभोग-लक्षणं 'परिहर्तुं' धातूनामनेकार्थत्वात्कर्तुमितिसूत्रार्थः ॥ २४ ॥

मूल-"जद्दिवसं समणा निग्गंथा सिज्जासंथारयं विप्पजहंति, तद्दिवसं अवरे समणा निग्गंथा हव्वमागच्छिज्जा सच्चेव उग्गहस्स पुव्वाणुण्णवणा चिट्ठइ अहालंदमवि उग्गहे ॥ २५ ॥

टीका--जद्दिवसं, [ इतिप्राकृतत्वात्सप्तम्यर्थे द्वितीया ] ततो यस्मिन् दिवसे श्रमणा निर्ग्रन्थाः शय्या च वसतिः, संस्तारकश्च-तृणफलकात्मकः शय्यासंस्तारकम्। अत्र शय्याग्रहणेन ऋतुबद्धः कालः सूचितः, संस्तारकग्रहणेन तु वर्षाकालः, अथवा कारणजाते ऋतुबद्धेऽपि संस्तारको गृह्यते, इतिकृत्वा संस्तारक ग्रहणेन द्वावपि गृहीतौ, ततो मासकल्पे वर्षावासे वा पूर्णे शय्यां संस्तारकं वा यस्मिन् दिवसे पूर्वस्थिताः साधवः 'विप्रजहति' परित्यजन्ति, तद्दिवस एवाऽपरे श्रमणा निर्ग्रन्था-स्तत्र क्षेत्रे 'हव्वं' शीघ्रमागच्छेयुः, ततः सैवाऽवग्रहस्य पूर्वानुज्ञापना तिष्ठति। किमुक्तं भवति?--"य एव ततः क्षेत्रान्निर्गतास्तेषामेवाऽवग्रहे तत् क्षेत्रम्, येतु तद्दिवसमन्ये आगतास्ते क्षेत्रोपसम्पन्ना इति कृत्वा यत् तत्र सचित्तादिकं तत् पूर्व-स्थितानामाभाव्यम्। कियन्तं कालं यावद्? इत्याह--"अहालंदमवि उग्गहे" इह यस्यां वेलायां ते साधवो निर्गताः तावतीं वेलां यावद् द्वितीयेऽप्यह्नि तेषामेवाऽवग्रहो भवतीतिविवक्ष्यते, ततः 'यथालन्दम्' इहाऽष्टपौरुषीप्रमाणं मध्यमं गृह्यते, एतावन्तमपि कालं तदीय एवावग्रहे तत् क्षेत्रम्, अतो यद्यागन्तुकास्तत्र सचित्ताऽदिग्रहणंकुर्वन्ति, तदा साधर्मिकस्तैन्यप्रत्ययं प्रायश्चित्तमापद्यन्ते । अत्र तु सचित्तेनाऽधिकार इति सूत्रार्थः ॥ २५ ॥

मूल-"अत्थि या इत्थ केइ उवस्सय परियावन्नए अचित्ते परिहरणा-रिहे सच्चेव उग्गहस्स पुव्वाणुण्णवणा चिट्ठइ अहालंदमवि उग्गहे ॥ २६ ॥

टीका—अस्ति च 'अत्र' अनन्तरसूत्र प्रस्तुते प्रतिश्रये किम्? 'किञ्चिद्' आहाराऽर्थजातादिकं गृहस्थसत्कम् उपाश्रये पर्यापन्नं-विस्मृतं परित्यक्तं वा उपाश्रय-पर्यापन्नं 'अचित्तं' प्राशुकम् 'परिहरणार्हं, साधूनां परिभोक्तुं योग्यम्, तत्र सैवाव-ग्रहस्य पूर्वानुज्ञापना तिष्ठति, तत्रोपाश्रये तिष्ठद्भिः पूर्वमेव 'अनुजानीत प्रायोग्यमृइत्येवं चावग्रहोऽनुज्ञापितः सैवानुज्ञापना, पश्चादुपाश्रय पर्यापन्नग्रहणे व्यवतिष्ठते न

पुनरभिनवमनुज्ञापनं कर्तव्यमितिभावः । कियन्तं कालमित्याह--"यथालन्दमपि" मध्यमलन्दमात्रमपि कालं यावदवग्रह इतिसूत्रार्थः ।। २६ ।।

**मूल--"सेवत्थुसु अव्वावडेसु अव्वोगडेसु अपरपरिग्गहिएसु अमर परिग्गहिएसु सच्चेव उग्गहस्स पुव्वाणुण्णवणा चिट्ठइ अहालंदमवि उग्गहे ।२७।**

टीका- से, तस्य निर्ग्रन्थस्य 'वास्तुषु' गृहेषु, कथम्भूतेषु ? 'अव्यापृतेषु' शटित-पतिततया व्यापार विरहितेषु 'अव्याकृतेषु' दायादादिभिरविभक्तेषु अथवाऽतीत काले केनाऽप्यनुज्ञातमितिनज्ञायते यत् तद् अव्याकृतं तेषु, तथा 'अपरपरिगृहीतेषु' परैः-अन्यैरनधिष्ठितेषु 'अमरपरिगृहीतेषु'-देवैः स्वीकृतेषु, सैवावग्रहस्य पूर्वानुज्ञापना तिष्ठति यथालन्दमप्यवग्रहे । किमुक्तं भवति ?-यावन्तं कालं तानि वास्तूनि तेषां पूर्वस्वामिनामवग्रहे वर्तन्ते तावन्तं कालं सैव पूर्वानुज्ञा तिष्ठति, न पुनर्भूयोऽप्यवग्रहोऽनुज्ञापनीय इति सूत्रार्थः ।। २७ ।।

**मूल--"से वत्थुसु वावडेसु वोगडेसु पर परिग्गहिएसु भिक्खुभावस्स अट्ठाए दोच्चं पि उग्गहे अणुण्णवेयव्वे सिया अहालंदमवि उग्गहे ।।२८।।**

टीका--से, तस्य निर्ग्रन्थस्य वास्तुषु-गृहेषु व्यापृतेषु-व्यापारयुक्तेषु वहमानकेष्वित्यर्थः व्याकृतेषु-दायादादिभिर्विभक्तेषु 'परपरिगृहीतेषु' अन्यवंशीयैरधिष्ठितेषु 'भिक्षुभावस्यार्थाय-भिक्षुभावो नाम ज्ञान-दर्शन-चारित्राणि तृतीय व्रतादिकं वा; तत्रैव भिक्षुशब्दस्य परमार्थत्वेन रूढत्वात् । सभिक्षुभावः परिपूर्णो भूयादित्येवमर्थं ये साधवः पश्चादागच्छन्ति, तैर्द्वितीयमपि वारमवग्रहोऽनुज्ञापयितव्यः स्याद् 'यथालन्दमपि' जघन्यलन्द मात्रमपि कालमवग्रहे तत्राऽवस्थाने इति सूत्रार्थः ।। २८ ।।

**मूल--"से अणुकुड्डेसु वा अणुभित्तीसु वा अणुचरियासु वा अणुफरिहासु वा अणुपंथेसु वा अणुमेरासु वा सच्चेव उग्गहस्स पुव्वाणुण्णवणा चिट्ठइ अहालंदमवि उग्गहे ।। २९ ।।**

टीका--से-तस्य निर्ग्रन्थस्य अनुकुड्येषु वा, कुड्यसमीपवर्तिषु वा प्रदेशेषु, एवम्-अनुभित्तिषु वा, अनुचरिकासु वा, अनुपरिखासु वा, अनुपथेषु वा अनुमर्यादासु वा । अत्रचरिका नगर प्राकारयोरपान्तराले हस्ताष्टक प्रमाणो मार्गः, परिखा-खातिका, मर्यादा-सीमा शेषं प्रतीतम् । एतेषु सैवावग्रहस्य पूर्वानुज्ञापना तिष्ठति यथालन्दमपि कालमवग्रह इति सूत्रार्थः ।। २९ ।।

मूल—"से गामस्स वा जाव रायहाणीए वा वहिया सेएणं सन्निविट्ठं पेहाए कप्पइ निग्गंथाण वा निग्गंथीण वा तद्दिवसं भिक्खायरियाए गंतुं पडिएत्तए। नो से कप्पइ तं रयणिं तत्थेव उवाइणा वित्तए। जो खलु निग्गंथो वा निग्गंथी वा तं रयणिं तत्थेव उवाइणाइ, उवातिणंतं वा साइ-ज्जति, से दुहतो वि अइक्कममाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं॥ ३०॥

टीका—से शब्दोऽथ शब्दार्थे। अथ ग्रामस्य वा यावद् राजधान्या वा, याव-त्करणात् नगरस्य वा खेटस्य वा इत्यादि परिग्रहः, एतेषामन्यतरस्य वहिः 'सेनां' राज्ञः स्कन्धावारं रोधकं कृत्वा सन्निविष्टं 'प्रेक्ष्य' दृष्ट्वा कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा तद्दिवसं भिक्षाचर्यायां गत्वा प्रत्यागन्तुम्। नो-नैव 'से' तस्य विवक्षि-तस्य भिक्षोः कल्पते तां रजनीं तत्रैव सेनायाम् उपादातुम्–अतिक्रामयितुम्। यः खलु निर्ग्रन्थो वा निर्ग्रन्थी वा तां रजनीं तत्रैवोपाददाति, उपाददतं वा स्वादयति स द्विधाऽप्यतिक्रामन्-जिनसीमानं राज सीमानं च विलुम्पन् आपद्यते चातुर्मासिकं परिहारस्थानमनुद्घातिकमिति सूत्रार्थः॥ ३०॥

मूल—"से गामंसि वा जाव संनिवेसंसि वा कप्पइ निग्गंथाण वा निग्गं-थीण वा सव्वओ समंता सकोसं जोयणं उग्गहं ओगिण्हित्ताणं चिट्ठित्तए॥ ३१॥ त्तिबेमि तइओ उद्देसो।

टीका-"अथ ग्रामे वा नगरे वा यावत् सन्निवेशे वा कल्पते निर्ग्रन्थानां वा निर्ग्र-न्थीनां वा 'सर्वतः' सर्वासुदिक्षु 'समन्तात्–चतसृष्वपि विदिक्षु सक्रोशं योजनमवग्रह-मवगृह्य स्थातुमिति सूत्रार्थः॥ ३१॥

इति तृतीय उद्देशकः

समाप्तः



# अथ चतुर्थ उद्देशकः

मूल—" तओ अणुग्घाइया पन्नत्ता, तंजहा—"हत्थकम्मं करेमाणे, मेहुणं पडिसेवमाणे, राइभोयणं भुंजमाणे ॥ १ ॥

टीका—त्रयः-त्रिसंख्याकाः अनुद्घातिकाः, उद्घातो नाम "अद्धेण छिन्नसेसं" ( गा० ····· ) इत्यादिविधिना भागपातः सान्तरदानं वा उद्घातः, स विद्यते येषु ते उद्घातिकाः, तद्विपरीता अनुद्घातिकाः प्रज्ञप्ताः-तीर्थकरादिभिः प्ररूपिताः । 'तद्यथा' इत्युपप्रदर्शनार्थः । हन्ति हसति वा मुखमावृत्यानेनेतिहस्तः-शरीरैकदेशो निक्षेपाऽऽदानादि समर्थः तेन यत् कर्म क्रियते तत्-हस्तकर्म, ( विषयाऽऽसेचनरूपं ) तत्कुर्वन् । तथा स्त्रीपुंसयुग्मं मिथुनमुच्यते, तस्य भावः कर्म वा मैथुनम्, तत् प्रतिसेवमानः । तथा रात्रौ भोजनम्-अशनादिकं भुञ्जानः । एष सूत्रार्थः ॥ १ ॥

मूल—" तओ पारंचिया पन्नत्ता, तंजहा—दुट्ठे पारंचिए, पमत्ते पारंचिए, अन्नमन्नं करेमाणे पारंचिए ॥ २ ॥

टीका—( शोधिः शुद्धिर्द्विविधा-तपोऽर्हा, छेदाऽर्हाच, तपोऽर्हाशोधिः खलु पूर्वसूत्रे प्रोक्ता, अथेदानीं छेदार्हाऽभिधीयते । सचच्छेदो द्विधा-देशतः सर्वतश्च, तत्र देशच्छेदः पञ्चरात्रिन्दिवादिकः पण्मासान्तः । सर्वच्छेदः 'मूलादिः' मूला-ऽनवस्थाप्य-पाराञ्चिक भेदात् त्रिविधः । अत्रसर्वच्छेदः-पाराञ्चिकलक्षणोऽधिक्रियते- "अथास्य सूत्रस्य व्याख्या-" त्रयः पाराञ्चिकाः प्रज्ञप्ताः । तद्यथा-दुष्टः पाराञ्चिकः, प्रमत्तः पाराञ्चिकः 'अन्योऽन्यं' परस्परं मुखपायु प्रयोगतः प्रतिसेवनां कुर्वाणः पाराञ्चिक इति सूत्र समासार्थः ॥ २ ॥

मूल—" ततो अणवट्ठप्पा पण्णत्ता,—तंजहा—साहम्मियाणं तेण्णं करेमाणे, अन्न धम्मियाणं तेण्णं करेमाणे, हत्थादालं दलमाणे ॥ ३ ॥

टीका—त्रयः—'अनवस्थाप्याः—तत्क्षणादेव व्रतेषु अनवस्थापनीयाः प्रज्ञप्ताः । तद्यथा—'साधर्मिकाः—साधवस्तेषां सत्कस्योत्कृष्टोपधेः शिष्यादेर्वा स्तैन्यं चौर्यं कुर्वाणः। अन्यधार्मिकाः—शाक्यादयो गृहस्था वा तेषांसत्कस्योपध्यादेः स्तैन्यंकुर्वन् । तथा हस्तेनाऽऽताडनं हस्तातालः, [ सूत्रे च तकारस्य दकारश्रुतिरार्षत्वात् ] तं दलमाणे-ददत्-यष्टिमुष्टि लकुटादिभिरात्मनः परस्य वा प्रहरन्निति भावः । अथवा—'हत्थालंवं' इतिपाठः, हस्तालम्ब इव हस्तालम्बः—अशिवादि प्रशमनार्थमभिचारुक मन्त्रादि प्रयोगः तं 'दलमाणे' कुर्वन्, यद्वा 'अत्थादाणं दलमाणे' इति पाठः, तत्र अर्थाऽऽदानम्—अर्थोपादानकारणमष्टाङ्गनिमित्तं ददत्-प्रयुञ्जानः एष सूत्रसंक्षेपार्थः ॥ ३ ॥

मूल—" तओ नो कप्पंति पव्वावित्तए, तंजहा—पंडए, वाइए, कीवे॥४॥

टीका—त्रयो नो कल्पन्ते प्रव्राजयितुम् । तद्यथा—पण्डकः—नपुंसकः । वातिको नाम यदा स्वनिमित्ततोऽन्यथा वा मेहनं कापायितं भवति, तदा न शक्नोति वेदं धारयितुं यावन्न प्रतिसेवा कृता (तथाविधः)। क्लीवः—असमर्थः सच दृष्टि क्लीवादि-लक्षणः । एष सूत्रार्थः ॥ ४ ॥

मूल—" एवं मुंडावित्तए, सिक्खावित्तए, उवट्ठावित्तए, संभुंजित्तए, संवासित्तए, ॥ ५ । ६ । ७ । ८ । ९ ॥

टीका—यथैते पण्डकादयस्त्रयः प्रव्राजयितुं न कल्पन्ते एवमेते-एव कथञ्चित्-छलितेन प्रव्राजिता अपि सन्तः 'मुण्डापयितुं' शिरोलोचेन लुञ्चितुं न कल्पन्ते ॥ एवं शिक्षापयितुं प्रत्युपेक्षणादि सामाचारीं ग्राहयितुम् । उपस्थापयितुं—महाव्रतेषु व्यवस्थापयितुम् । सम्भोक्तुम , एक मण्डली समुद्देशादिना व्यवहारयितुं । संवासयितुम्—आत्मसमीपे आसयितुमिति सूत्रार्थः ॥ ५ । ६ । ७ । ८ । ९ ॥

मूल—" तओ नो कप्पंति वाइत्तए, तंजहा—' अविणीए, विगई-पडिवद्धे, अविओसवियपाहुडे ॥ १० ॥

मूल—"तओ कप्पंति वाइत्तए, तंजहा—विणीए, नो विगईपडिवद्धे विओसवियपाहुडे ॥ ११ ॥

टीका—त्रयो नो कल्पन्ते वाचयितुं-सूत्रं पाठयितुमर्थं वा श्रावयितुम् । तद्यथा

अविनीत-सूत्राऽर्थदातुर्वन्दनादि विनयरहितः। विकृतिप्रतिबद्धः- घृतादिरस विशेष-गृद्धः-अनुपधानकारीति भावः। अव्यवशमितम्-अनुपशान्तं प्राभृतमिव प्राभृतं-नरकपाल कौशलिकं तीव्रक्रोधलक्षणं यस्याऽसौ-अव्यवशमित प्राभृतः। एत-द्विपरीतास्तु त्रयोऽपि कल्पन्ते वाचयितुम्। तद्यथाविनीतो नो विकृति प्रतिबद्धो व्यपशमितप्राभृतश्चेति सूत्रार्थः ॥ १० ॥ ११ ॥

मूल-"तओ दुस्सन्नप्पा पन्नत्ता, तं जहा-दुट्ठे, मूढे, वुग्गाहिए ॥१२॥

टीका--त्रयः दु खेन-कृच्छ्रेण संज्ञाप्यन्ते-प्रतिबोध्यन्ते, इति दुःसंज्ञाप्याः प्रज्ञप्ता। तद्यथा--'दुष्टः-तत्त्वं प्रज्ञापकं वा प्रतिद्वेषवान् स च अप्रज्ञापनीयः द्वेषेणो-पदेशाऽप्रतिपत्तेः। एवं मूढो-गुणदोषाऽनभिज्ञः। व्युद्ग्राहितोनामकुप्रज्ञापक दृढीकृत विपरीतावबोधः। एष सूत्रार्थः ॥ १२ ॥

मूल-"तओ सुसण्णप्पा पन्नत्ता, तंजहा-"अदुट्ठे, अमूढे, अवुग्गा-हिए ॥ १३ ॥

टीका--त्रयः सुसंज्ञाप्याः-सुख प्रज्ञापनीयाः प्रज्ञप्ताः। तद्यथा-अदुष्टोऽमूढोऽव्यु-द्ग्राहितश्चेति ॥ १३ ॥

मूल-"निग्गंथिं च णं गिलायमाणिं पिता वा भाया वा पुत्तो वा पलिस्सएज्जा, तं च निग्गंथी साइज्जेज्जा, मेहुणपडिसेवणपत्ता, आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं ॥ १४ ॥

मूल-"निग्गंथं च णं गिलायमाणं माया वा, भगिणी वा, धूतावा पलिस्सएज्जा, तं च निग्गंथे साइज्जेज्जा, मेहुण पडिसेवणपत्ते आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं ॥ १५ ॥

टीका--निर्ग्रन्थीं प्रागुक्त शब्दार्थाम् च शब्दो वाक्यान्तरोपन्यासे, 'णं' इति वाक्यालङ्कारे 'गिलायमाणिं, इति ग्लायन्तीं (ग्लै-हर्षक्षये,) शरीरक्षयेण हर्षक्षय मनुभवन्तीं, पिता वा, भ्राता वा, पुत्रो वा निर्ग्रन्थः सन् 'परिष्वजेत, प्रपतन्तीं धार-यन्, निवेशयन्, उत्थापयन् वा शरीरे स्पृशेत्, 'तं च, पुरुषस्पर्शं सा निर्ग्रन्थी मैथुन प्रतिसेवन प्राप्ता स्वादयेत्-अनुमोदयेत् तत आपद्यते चातुर्मासिकं परिहारस्थान मनुद्घातिकम्। एवं निर्ग्रन्थ सूत्रमपि व्याख्येयम, नवरं मातावा, भगिनी वा, दुहिता

वा परिष्ठवेत् ( तं च निर्ग्रन्थः अनुमोदयेन ततः मैथुन प्रतिसेवना प्राप्तः–आपद्यते चातुर्मासिकं परिहार स्थानमनुद्घातिकम ) एष सूत्रार्थः ॥ १४ ॥ १५ ॥

मूल–"नो कप्पइ निग्गंथाण वा निग्गंथीण वा असणं वा पाणं वा, खाइमं वा, साइमं वा, पढमाए पोरिसीए पडिग्गाहित्ता पच्छिमं पोरिसिं उवाइणाविंत्तए। से य आहच्च उवाइणाविए सिया तं नो अप्पणा भुंजिज्जा, नो अन्नेसिं अणुप्पएज्जा, एगंते बहुफासुए थंडिले पडिलेहित्ता पमज्जित्ता परिट्ठवेयव्वे सिया। तं अप्पणा भुंजमाणे अन्नेसिं वा दलमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं उग्घाइयं ॥ १६ ॥

मूल–"नो कप्पइ निग्गंथाण वा २ असणं वा ४ परं अद्ध जोयण मेराए उवायणाविंत्तए। से य आहच्च उवाइणाविए सिया, तं नो अप्पणा भुंजिज्जा नो अन्नेसिं अणुप्पएज्जा एगंते बहुफासुए थंडिले पडिलेहित्ता पमज्जित्ता परिट्ठवियव्वे सिया। तं अप्पणा भुंजमाणे अन्नेसिं वा दलमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं उग्घाइयं ॥ १७ ॥

टीका–नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा अशनं वा, पानं वा, खादिमं वा, स्वादिमं वा, प्रथमायां पौरुष्यां प्रतिगृह्य पश्चिमां पौरुषीम् 'उवाइणावित्तए त्ति, उपानाययितुं–सम्प्रापयितुमिति। तच्च "आहच्च,–कदाचित उपानायितं स्यात्, ततः 'तद्, अशनादिकं नात्मना भुञ्जीत, नवा अन्येषां साधूनामनुप्रदद्यात्। किम्पुनस्तर्हि विधेयम्? इत्याह–एकान्ते बहुप्राशुके स्थण्डिले प्रत्युपेक्ष्य–चक्षुषा प्रमृज्य–रजोहरणेन परिष्ठापयितव्यं स्यात्। तद् आत्मना भुञ्जानोऽन्येषां वा ददान आपद्यते चातुर्मासिकं परिहारस्थानमुद्घातिकम् ॥ एवं क्षेत्रातिक्रान्त सूत्रमपि वक्तव्यम्–नवरम्–अर्द्धयोजनलक्षणाया मर्यादाया अतिक्रामयितुमशनादिकं न कल्पते। स्यात् तदुपानायितं ( उपानाययितं ) भवेत्, ततो यः स्वयं तद् भुङ्क्तेऽन्येषां वा ददाति तस्य चतुर्लघुकमिति सूत्रद्वयार्थः ॥ १६ ॥ १७ ॥

मूल–"निग्गंथेण य गाहावइकुलं पिंडवाय पडियाए अणुप्पविट्ठेणं अन्नयरे अचित्ते अणेसणिज्जे पाणभोयणे पडिग्गाहिए सिया, अत्थि या इत्थ केइ सेहतराए अणुवट्ठावियए, कप्पइ से तस्स दाउं (वा) अणुप्पदाउं वा, नत्थि या इत्थ केइ सेहतराए, अणुवट्ठावियए तं नो अप्पणा भुंजेज्जा,

नो अन्नेसिं दावए, एगंते बहुफासुए पएसे पडिलेहित्ता पमज्जित्ता परि-ट्ठवेयव्वे सिया ॥ १८ ॥

टीका—निर्ग्रन्थेन च गृहपतिकुलं पिण्डपातप्रतिज्ञयाऽनुप्रविष्टेन 'अन्नतरे त्ति' उद्गमोत्पादनैषणादोषाणामन्यतरेण दोषेणदुष्टम् 'अ.षणीयम्' अशुद्धम्, 'अचित्तं निर्जीवं पानभोजनमनाभोगेन प्रतिगृहीतं स्यात्' तच्चोत्कृष्टं न यतः ततः परित्यक्तुं शक्यते, अस्ति चात्र कश्चित् 'शैक्षतरक', लघुतरः अनुपस्थापितकः, अनारोपित-महाव्रतः, कल्पते 'से' तस्य निर्ग्रन्थस्य तस्मै शैक्षाय दातुमनुप्रदातुं वा। तत्र दातुं-प्रथमतः, 'अनुप्रदातुम्-तेनाऽन्यस्मिन्नेषणीये सति पश्चात् प्रदातुम्। अथ नास्त्यत्र कोऽपि शैक्षतरकोऽनुपस्थापितकस्ततस्तद् 'नैवात्मनाभुञ्जीत नवाऽन्येषां दद्यात्' किन्तु एकान्ते बहुप्रासुके प्रदेशे प्रत्युपेक्ष्य प्रमृज्य च परिष्ठापयितव्यं स्यात्। इति सूत्रार्थः ॥ १८ ॥

मूल—"जे कडे कप्पट्ठियाणं कप्पइ से अकप्पट्ठियाणं, नो से कप्पइ कप्पट्ठियाणं। जे कडे अकप्पट्ठियाणं णो से कप्पइ कप्पट्ठियाणं, कप्पइ से अकप्पट्ठियाणं। कप्पे ठिया कप्पट्ठिया, अकप्पे ठिया अकप्पट्ठिया ॥१९॥

टीका—यद् अशनादिकं 'कृतं, विहितं कल्पस्थितानामर्थाय कल्पते तद् अकल्प-स्थितानाम्। नो तत् कल्पते कल्पस्थितानाम्। "इहाऽचेलक्यादौ दशविधे कल्पे ये स्थितास्ते कल्पस्थिता उच्यन्ते पञ्चयामधर्मप्रतिपन्ना इति भावः। ये पुनरेतस्मिन् कल्पे सम्पूर्णे न स्थितास्तेऽकल्पस्थिताः, चतुर्यामधर्मप्रतिपत्तार इत्यर्थः। ततः पञ्चया-मिकानुद्दिश्यकृतं चतुर्यामिकानां कल्पते, इत्युक्तं भवति। तथा यद् 'अकल्पस्थितानां चतुर्यामिकानामर्थाय कृतं नोतत्कल्पते, कल्पस्थितानां पञ्चयामिकानां किन्तु कल्पते तद् 'अकल्पस्थितानां चतुर्यामिकानाम्। अत्रैव व्युत्पत्तिमाह—'कल्पे अचेलक्यादौ दशविधे स्थिताः कल्पस्थिताः। अकल्पे अस्थितकल्परूपे स्थिता अकल्पस्थिताः। एष सूत्रार्थः ॥ १९ ॥

मूल—"भिक्खू य गणाओ अवक्कम्म इच्छेज्जा अन्नं गणं उवसंपज्जि-त्ताणं विहरित्तए, नो से कप्पइ अणापुच्छित्ता आयरियं वा, उवज्झायं वा पवत्तिं वा, थेरं वा, गणिं वा, गणहरं वा, गणावच्छेइयं वा अन्नं गणं उवसंपज्जित्ताणं विहरित्तए। कप्पइ से आपुच्छित्ता आयरियं वा जावगणा-

वच्छेइयं वा अन्नं गणं उवसंपज्जित्ताणं विहरित्तए ; ते य से वियरेज्जा एवं से कप्पइ अन्नं गणं उवसंपज्जित्ताणं विहरित्तए ते य से नो वितरेज्जा एवं से नो कप्पइ अण्णं गणं उवसंपज्जित्ताणं विहरित्तए ॥ २० ॥

टीका–"भिक्षुः–सामान्य साधुश्चशब्दान्निर्ग्रन्थी वा गणाद् 'अवक्रम्य–निर्गत्य इच्छेद्–अभिलपेदन्यं गणमुपसम्पद्यविहर्तुम्। नो से-तस्य भिक्षोः कल्पतेऽनापृच्छ्याऽऽचार्यं वा उपाध्यायं वा प्रवर्तकं वा, स्थविरं वा गणिनं वा, गणधरं वा, गणावच्छेदकं वा अन्यं गणमुपसम्पद्य विहर्तुम्। कल्पते से-तस्य भिक्षोराचार्यं वा यावत्करणादुपाध्यायं वा प्रवर्तिनं वा स्थविरं वा गणिनं वा गणधरं वा गणावच्छेदकं वाऽऽपृच्छ्यान्यं गणमुपसम्पद्य विहर्तुम्। ते चाऽऽचार्यादय आपृष्टाः सन्तस्तस्यान्यगणगमनं वितरेयुः–अनुजानीयुः, तत एवं तस्य कल्पतेऽन्यं गणमुपसम्पद्यविहर्तुम्। ते च तस्य न वितरेयुस्ततो नो कल्पते तस्याऽन्यगणमुपसम्पद्य विहर्तुमिति सूत्रार्थः।२०।

मूल–"गणावच्छेइए य गणाओ अवक्कम्म इच्छेज्जा अण्णं गणं उवसंपज्जित्ताणं विहरित्तए, नो कप्पइ गणावच्छेइयस्स गणावच्छेइयत्तं णिक्खिविता अण्णं गणं उवसंपज्जित्ताणं विहरित्तए, णो से कप्पइ अणापुच्छित्ता आयरियं वा जाव अन्नं गणं उपसंपज्जित्ताणं विहरित्तए, कप्पइ से आपुच्छित्ता आयरियं वा जाव विहरित्तए। तेय से वितरंति (यरेज्जा) एवं से कप्पइ जाव विहरित्तए तेय से नो वितरंति (यरेज्जा) एवं से नो कप्पइ जावविहरित्तए ॥ २१ ॥

मूल–"आयरिय उवज्झाए य गणाओ अवक्कम्म इच्छेज्जा अन्नं गणं उवसंपज्जित्ताणं विहरित्तए, कप्पइ आयरिय उवज्झायस्स आयरिय उवज्झायत्तं णिक्खिवित्ता अण्णं गणं उवसंपज्जित्ताणं विहरित्तए। णो से कप्पइ अणापुच्छिता आयरियं वा जाव अन्नं गणं उवसंपज्जित्ताणं विहरित्तए। कप्पति से आपुच्छित्ता जाव विहरित्तए। ते य से वितरंति, एवं से कप्पति अन्नं गणं उवसंपज्जित्ताणं विहरित्तए। ते य से णो वियरंति एवं से णो कप्पति अन्नं गणं उवसंपज्जित्ताणं विहरित्तए ॥२२॥

टीका—अस्य सूत्र द्वयस्य प्राग्वद् व्याख्या, न वरम्––गणावच्छेदकत्वमाचार्योपाध्यायत्वं च निक्षिप्य गन्तव्यमितिविशेषः ॥ २१ ॥ २२ ॥

मूल—"भिक्खू य गणाओ अवक्कम्म इच्छेज्जा अन्नं गणं संभोग पडियाए उवसंपज्जित्ताणं विहरित्तए। नो से कप्पइ अणापुच्छित्ता आयरियं वा जाव अन्नं गणं संभोगपडियाए उवसंपज्जित्ताणं विहरित्तए, कप्पइ से आपुच्छित्ता आयरियं वा जाव विहरित्तए। ते य से वियरेज्जा एवं से कप्पइ जाव विहरित्तए, ते य से नो वियरेज्जा एवं से नो कप्पइ जाव विहरित्तए। जत्थुत्तरियं धम्मविणयं लभेज्जा एवं से कप्पइ अन्नं गणं संभोगपडियाए उवसंपज्जित्ताणं विहरित्तए, जत्थुत्तरियं धम्मविणयं नो लभेज्जा एवं से नो कप्पइ अन्नं गणं जाव विहरित्तए॥ २३॥

टीका—व्याख्या प्राग्वत्। नवरं—सम्भोगः—एक मण्डल्यां समुद्देशनादिरूपः, तदर्थमयं तन्निमित्तम्। जत्थुत्तरियं, इत्यादि—'यत्र' गच्छे उत्तरं—प्रधानतरं 'धर्मविनयं—(स्मा) स्मरणावारणादिरूपां धार्मिकीं शिक्षां लभेत, एवं 'से' तस्य कल्पते अन्यं गण मुपसम्पद्य विहर्तुम्। यत्रोत्तरं धर्मविनयं नो लभेत, एवं 'से' तस्य नो कल्पते उपसम्पद्य विहर्तुमिति सूत्रार्थः॥ २३॥

मूल—"गणावच्छेइए य गणाओ अवक्कम्म इच्छेज्जा अन्नं गणं संभोगपडियाए उवसंपज्जित्ताणं विहरित्तए। णो से कप्पति गणावच्छेइयत्तं अणिक्खिवित्ता संभोगपडियाए जाव विहरित्तए, कप्पति से गणावच्छेइयत्तं णिक्खिवित्ता जाव विहरित्तए। णो से कप्पइ अणापुच्छित्ता आयरियं वा जाव विहरित्तए, कप्पइ से आपुच्छित्ता आयरियं वा जाव विहरित्तए। ते य से वितरंति एवं से कप्पइ अन्नं गणं संभोगपडियाए जाव विहरित्तए, ते य से नो वितरंति एवं से णो कप्पइ जाव विहरित्तए। जत्थुत्तरियं धम्मविणयं लभेज्जा एवं से कप्पति अन्नं गणं संभोगपडियाए जाव विहरित्तए जत्थुत्तरियं धम्मविणयं नो लभेज्जा एवं से णो कप्पइ जाव विहरित्तए।२४।

मूल—आयरिय उवज्झाए य गणाओ अवक्कम्म इच्छेज्जा अन्नं गणं संभोगपडियाए जाव विहरित्तए, णो से कप्पइ आयरिय उवज्झायत्तं अणिक्खिवित्ता अण्णं गणं संभोग पडियाए जाव विहरित्तए, कप्पइ से आयरिय उवज्झायत्तं णिक्खिवित्ता जाव विहरित्तए। णो से कप्पइ अणापुच्छित्ता आयरियं वा जाव विहरित्तए, कप्पति से आपुच्छित्ता आयरियं वा जाव

विहरित्तए। ते य से वितरंति एवं से कप्पति जाव विहरित्तए, ते य से णो वितरंति एवं से णो कप्पति जाव विहरित्तए। जत्थुत्तरियं धम्मविणयं लभेज्जा एवं से कप्पइ जाव विहरित्तए। जत्थुत्तरियं धम्मविणयं नो लभेज्जा एवं से णो कप्पति जाव विहरित्तए ॥ २५ ॥

टीका--अस्य सूत्रद्वयस्य व्याख्या पूर्ववत् ॥ २४। २५ ॥

मूल-"भिक्खू य इच्छिज्जा अन्नं आयरिय उवज्झायं उद्दिसावित्तए, नो से कप्पइ अणापुच्छित्ता आयरियं वा जाव गणावच्छेइयं वा अन्नं आयरिय उवज्झायं उद्दिसावित्तए। कप्पइ से आपुच्छित्ता आयरियं वा जाव गणावच्छेइयं वा अन्नं आयरियं उवज्झायं उद्दिसावित्तए। ते य से वियरिज्जा, एवं से कप्पइ अन्नं आयरिय उवज्झायं उद्दिसावित्तए। ते य से नो वियरेज्जा एवं से नो कप्पइ अन्नं आयरिय उवज्झायं उद्दिसावित्तए। नो से कप्पइ तेसिं कारणं अदीवित्ता अन्नं आयरिय उवज्झायं उद्दिसावित्तए, कप्पति से तेसिं कारणं दीवित्ता अन्नं आयरिय उवज्झायं उद्दिसावित्तए ॥ २६ ॥

टीका- व्याख्या प्राग्वत्। नवरम्-अन्यम्-आचार्योपाध्यायमुद्देशयितुम्, आचार्यश्च उपाध्यायश्च-इत्याचार्योपाध्यायम्-(समाहारद्वन्द्वः,) यद्वा आचार्ययुक्त उपाध्याय आचार्योपाध्यायः (शाकपार्थिववत्-मध्यमपदलोपी समासः) आचार्योपाध्यायावित्यर्थः, तावन्यावुद्देशयितुमात्मन इच्छेत्। ततो नो कल्पते अनापृच्छ्याऽऽचार्यं वा यावद् गणावच्छेदकं वा इत्यादि प्राग्वद् द्रष्टव्यम्। तथा न कल्पते तेषाम्-आचार्यादीनां कारणम् 'अदीपयित्वा, अनिवेद्य अन्यमाचार्योपाध्यायम् 'उद्देशयितुम्' आत्मनो गुरुतया व्यवस्थापयितुम् 'कारणंदीपयित्वा तु कल्पते।' एष सूत्रार्थः ॥ २६ ॥

मूल-"गणावच्छेइए य इच्छिज्जा अन्नं आयरिय उवज्झायं उद्दिसावित्तए, नो से कप्पइ गणावच्छेइयत्तं अनिक्खिवित्ता अन्नं आयरिय-उवज्झायं उद्दिसावित्तए, कप्पइ से गणावच्छेइयत्तं निक्खिवित्ता अन्नं आयरिय उवज्झायं उद्दिसावित्तए। नो से कप्पइ अणापुच्छित्ता आयरियं वा जाव गणावच्छेइयं वा अन्नं आयरिय-उवज्झायं उद्दिसावित्तए, कप्पइ से आपुच्छित्ता जाव उद्दिसावित्तए। नो से कप्पति तेसिं कारणं अदीवित्ता

अन्नं आयरिय-उवज्झायं उद्दिसावित्तए, कप्पइ से तेसिं कारणं दीवित्ता अन्नं जाव उद्दिसावित्तए ॥ २७ ॥

मूल—आयरिय उवज्झाए इच्छिज्जा अन्नं आयरिय उवज्झायं उद्दिसावित्तए, नो से कप्पइ आयरिय उवज्झायत्तं अनिक्खिवित्ता अन्नं आयरिय उवज्झायं उद्दिसावित्तए, कप्पइ से आयरिय उवज्झायत्तं निक्खिवित्ता अन्नं आयरिय उवज्झायं उद्दिसावित्तए । णो से कप्पति अणापुच्छित्ता आयरियं वा जाव गणावच्छेइयं वा अन्नं आयरिय उवज्झायं उद्दिसावित्तए, कप्पति से आपुच्छित्ता आयरियं वा जाव गणावच्छेइयं वा अन्नं आयरिय-उवज्झायं उद्दिसावित्तए । ते य से वितरंति एवं से कप्पति जाव उद्दिसावित्तए, ते य से णो वितरंति एवं से नो कप्पइ जाव उद्दिसावित्तए । णो से कप्पइ तेसिं कारणं अदीवित्ता अन्नं आयरिय-उवज्झायं उद्दिसावित्तए, कप्पइ से तेसिं कारणं दीवित्ता जाव उद्दिसावित्तए ॥२८॥

टीका- अस्य सूत्रद्वयस्य व्याख्या प्राग्वत् ॥ २७ ॥ २८ ॥

मूल—भिक्खू य राओ वा वियाले वा आहच्च वीसुं भिज्जा, तं च सरीरगं केइ वेयावच्च करे भिक्खू इच्छिज्जा एगंते बहुफासुए पएसे परिट्ठवित्तए, अत्थियाइत्थ केइ सागारियसंतिए उवगरणजाए अचित्ते परिहरणारिहे, कप्पइ से सागारिकडं गहाय तं सरीरगं एगंते बहुफासुए पएसे परिट्ठवित्ता तत्थेव उवनिक्खिवियव्वे सिया ॥ २९ ॥

टीका—भिक्षुः च शब्दादाचार्योपाध्यायौ वा रात्रौ वा विकाले वा 'आहच्च' कदाचित्-विष्वग् भवेत्-जीव शरीरयोः पृथग् भावमाप्नुयात्-म्रियत इत्यर्थः । तच्च शरीरकं कश्चिद् वैयावृत्यकरो भिक्षुरिच्छेत् 'एकान्ते' विविक्ते 'बहुप्राशुके' कीटकादिसत्त्वरहिते प्रदेशे परिष्ठापयितुम् । अस्ति चात्र किञ्चित्सागारिक सत्कम् 'अचित्तं' निर्जीवं 'परिहरणार्हं'-परिभोगयोग्यमुपकरणजातं-वहनकाष्ठमित्यर्थः । कल्पते 'से' तस्य भिक्षोस्तत्काष्ठं सागारिक कृतं-सागारिकस्यैव सत्कमिदं नास्माकम्, इत्येवं गृहीत्वा तत्-शरीरमेकान्ते बहुप्राशुके प्रदेशे परिष्ठापयितुम् । तच्च परिष्ठाप्य यतो गृहीतं तत् काष्ठं तत्रैवोपनिक्षेप्तव्यं स्यादिति सूत्रार्थः ॥ २९ ॥

मूल—भिक्खू य अहिकरणं कट्टु तं अहिगरणं अविओसवित्ता नो से कप्पइ गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा बहिया वियारभूमिं वा विहार भूमिं वा णिक्खमित्तए वा पविसित्तए वा गामाणुगामं वा दूइज्जित्तए, गणातो वा गणं संकमित्तए, वासावासं वा वत्थए। जत्थेव अप्पणो आयरिय उवज्झायं पासेज्जा बहुस्सुयं बब्भागमं तस्संतिए आलोइज्जा पडिक्कमिज्जा निंदिज्जा गरहिज्जा विउट्टेज्जा विसोहेज्जा अकरणयाए अब्भुट्ठिज्जा आहारिहं तवोकम्मं पायच्छित्तं पडिवज्जेज्जा। से य सुएण पट्ठविए आइअव्वे सिया, से य सुएण नो पट्ठविए नो आइतव्वे सिया, से य सुएण पट्ठविज्जमाणे नो आइयइ से निज्जूहियव्वे सिया ॥ ३० ॥

टीका--भिक्षुः प्रागुक्तः च शब्दादुपाध्यायादिपरिग्रहः अधिकरणं-कलहं कृत्वा नो कल्पते तस्य तदधिकरणमव्यवशमय्य गृहपतिकुलं भक्ताय वा पानाय वा निष्क्रमितुं वा प्रवेष्टुं वा 'बहिर्विचारभूमौ वा विहारभूमौ वा निष्क्रमितुं वा प्रवेष्टुं वा, ग्रामानुग्रामं वा द्रोतुं विहर्तुम्। गणाद्वा गणं संक्रमितुम्। वर्षावासं वा वस्तुम्' किन्तु यत्रैवात्मन आचार्योपाध्यायं पश्येत्, कथम्भूतम् ? बहुश्रुतं छेदग्रन्थादिकुशलं, बह्वागमम्-अर्थतः प्रभूतागमम्। तत्र तस्यान्तिके 'आलोचयेत्' स्वापराधं वचसा प्रकटयेत् प्रतिक्रामेत्-मिथ्यादुष्कृतं तद्विषये दद्यात्, 'निन्द्याद्' आत्मसाक्षिकंजुगुप्सेत, गर्हेत-गुरुसाक्षिकं निन्द्यात्। इह च निन्दनं गर्हणं वा तात्त्विकं तदा भवति यदा तत्करणतः प्रतिनिवर्तते तत आह-'व्यावर्तेत, तस्मादपराधपदाद्-निवर्तेत। व्यावृत्तावपिकृतात्पापात् तदामुच्यते यदाऽऽत्मनोविशोधिर्भवति, ततआह-"आत्मानं विशोधयेत्, पापमलस्फेटनतो निर्मलीकुर्यात्। विशुद्धिः पुनरपुनः करणतायामुपपद्यते ततस्तामेवाऽऽह-"अकरणता-अकरणीयता तया अभ्युत्तिष्ठेत्। पुनरकरणतया अभ्युत्थानेऽपि विशोधिः प्रायश्चित्तप्रतिपत्त्या भवति, तत आह-'यथाऽर्हम्' यथायोग्यं तपः कर्म प्रायश्चित्तं प्रतिपद्येत। 'तच्च' प्रायश्चित्तमाचार्येण 'श्रुतेन' श्रुतानुसारेण यदि 'प्रस्थापितं' प्रदत्तं तदा 'आदातव्यं, ग्राह्यं स्याद्-भवेत्, अथ श्रुतेन न प्रस्थापितं तदा नादातव्यं स्यात् 'स' च आलोचको यदि श्रुतेन प्रस्थाप्यमानमपि तत् प्रायश्चित्तं 'ना ददाति-न प्रतिपद्यते ततः सः 'निर्यूहितव्यः, 'अन्यत्र शोधिंकुरुष्व' इति निषेधनीयः स्यादिति सूत्रार्थः ॥ ३० ॥

मूल–परिहार कप्पट्ठियस्स णं भिक्खुस्स कप्पइ आयरिय उवज्झाएणं तद्दिवसं एगगिहंसि पिंडवायं दवावित्तए, तेण परं णो से कप्पइ असणं वा पाणं वा खाइमं वा साइमं वा दाउं वा अणुप्पदाउं वा। कप्पइ से अन्नयरं वेयावडियं करित्तए, तंजहा–उट्ठावणं वा, निसिआवणं वा, तुयट्टावणं वा, उच्चार पासवण–खेल–सिंघाण विगिंचणं वा विसोहणं वा करित्तए। अह पुण एवं जाणिज्जा–छिन्नावाएसु पंथेसु आउरे झिंझिए पिवासिए, तवस्सी, दुब्बले, किलंते मुच्छिज्ज पवडिज्ज वा एवं से कप्पइ असणं वा ४ दाउं वा अणुप्पदाउं वा॥ ३१॥

टीका– परिहार कल्पस्थितस्य भिक्षोः कल्पते आचार्योपाध्यायेन 'तद्दिवसम्' इन्द्रमहाद्युत्सव दिने एकस्मिन् गृहे 'पिण्डपातं' विपुलमवगाहिमादि भक्तलाभं दापयितुम। ततः परं 'से' तस्य नो कल्पते अशनं वा पानं वा खादिमं वा स्वादिमं वा दातुमनुप्रदातुं वा। तत्र दातुमेकशः, अनुप्रदातुं पुनः पुनः। किन्तु कल्पते 'से' तस्य परिहारिकस्यान्यतरद् वैयावृत्त्यं कर्तुम्। तद्यथा--"उत्थापनं वा निपादनं वा त्वग्वर्तापनं वा उच्चार प्रस्रवण खेल सिङ्घानादीनां च विवेचनं वा–परिष्ठापनं 'विशोधनं वा' उच्चारादिखरण्टितोपकरणादेः प्रक्षालनं कर्तुम्। अथ पुनरेवं जानीयात्–छिन्नापातेषु, व्यवच्छिन्न गमाऽऽगमेषु पथिषु आतुरः ग्लानः 'झिञ्झितः' बुभुक्षार्तः पिपासितः-तृषितो न शक्नोति विवक्षितं ग्रामंप्राप्तुम्, अथवा ग्रामादावपि तिष्ठतां सः तपस्वी षष्ठाऽष्टमादिपरिहारतपः कर्मकुर्वन् दुर्बलो भवेत्, ततो भिक्षाचर्यया क्लान्तः सन् मूर्च्छेद्वा प्रपतेद्वा 'एवं' से–तस्य कल्पते अशनादिकं दातुमनुप्रदातुं वा एष सूत्रार्थः॥ ३१॥

मूल–"नो कप्पइ निग्गंथाण वा निग्गंथीण वा इमाओ पंच महण्णवाओ महानदीओ उद्दिट्ठाओ गणियाओ वंजियाओ अंतो मासस्स दुक्खुत्तो वा तिक्खुत्तो वा उत्तरित्तए वा संतरित्तए वा। तं जहा–गंगा, जउणा, सरऊ, कोसिया, मही॥ ३२॥

टीका–नो कल्पंते, न युज्यन्ते, सूत्रे एक वचननिर्देशः प्राकृतत्वात् निर्ग्रन्थानां वा वा निर्ग्रन्थीनां वा इमाः-प्रत्यक्षासन्नाः पञ्च महार्णवा–बहूदकतया महार्णवकल्पाः महासमुद्रगामिन्यो वा महानद्यः-गुरुनिम्नगाः उद्दिष्टाः सामान्येनाऽभिहिता यथा

महानद्य इति गणिता यथा पञ्चेति 'व्यञ्जिताः' व्यक्तीकृता यथा गङ्गेत्यादि 'अन्तर' मध्ये मासस्य द्विकृत्वो वा त्रिकृत्वो वा उत्तरीतुं वा-बाहुजंघादिना सन्तरीतुं वा-नावादिना। तद्यथा गङ्गा, १ यमुना,२ सरयू, ३ कोशिकी,४ मही, ५ एष सूत्रार्थः॥३२॥

मूल-"अह पुणएवं जाणिज्जा-एरावइ कुणालाए जत्थ चक्किया एगं पायं जले किच्चा एगं पायं थले किच्चा एवण्हं कप्पइ अंतो मासस्स दुक्खुत्तो वा तिक्खुत्तो वा उत्तरित्तए वा संतरित्तए वा जत्थ एवं नो चक्किया एवण्हं नो कप्पइ अंतो मासस्स दुक्खुत्तो वा तिक्खुत्तो वा उत्तरित्तए वा संतरित्तए वा ॥ ३३ ॥

टीका--अथ पुनरेवं जनीयात्--ऐरावती नाम नदी कुणालाया नगर्याः समीपे जंघार्द्ध प्रमाणेनोद्वेधेन वहति तस्यामन्यस्यां वा यत्रैवं "चक्किया-शक्नुयादुत्तरीतुमिति शेषः। कथम्? इत्याह-एकं पादं जले कृत्वा, एकं पादं 'स्थले' आकाशे कृत्वा 'एवण्हं' इति वाक्यालङ्कारे,यत्रोत्तरीतुं शक्नुयात् तत्र कल्पतेऽन्तर्मासस्य द्विःकृत्वो वा त्रिःकृत्वो वा उत्तरीतुं-लंघयितुं सन्तरीतुं वा भूयः प्रत्यागन्तुम्। यत्र पुनरेवमुत्तरीतुं न शक्नुयात् तत्र नो कल्पतेऽन्तर्मासस्य द्विकृत्वो वा त्रिकृत्वो वोत्तरीतुं वा सन्तरीतुं वा। इति सूत्रार्थः ॥ ३३ ॥

मूल-"से तणेसु वा तणपुंजेसु वा पलालेसु वा पलालपुंजेसु वा अप्पंडेसु अप्पपाणेसु अप्पबीएसु अप्पहरिएसु अप्पुस्सेसु अप्पुंत्तिग पणग दगमट्टिय मक्कडगसंताणएसु अहेसवण मायाए नो कप्पइ निग्गंथाण वा निग्गंथीण वा तहप्पगारे उवस्सए हेमंत गिम्हासु वत्थए॥ ३४ ॥

मूल-"से तणेसु वा जाव संताणएसु उप्पिसवणमायाए कप्पइ निग्गंथाण वा निग्गंथीण वा तहप्पगारे उवस्सए हेमंत गिम्हासु वत्थए ॥३५ ॥

मूल-"से तणेसु वा जाव संताणएसु अहेरयणी मुक्कमउडेसु नो कप्पइ निग्गंथाण वा निग्गंथीण वा तहप्पगारे उवस्सए वासावासं वत्थए ॥३६॥

मूल-"से तणेसु वा जाव संताणएसु उप्पिरयणीमुक्कमउडेसु कप्पइ निग्गंथाण वा निग्गंथीण वा तहप्पगारे उवस्सए वासावासं वत्थए ॥३७॥

टीका--अथ तृणेषु वा तृणपुंजेषु वा पलालेषु वा पलाल पुंजेषु वा अल्पाण्डेषु,

अल्पप्राणेषु अल्पबीजेषु अल्पहरितेषु अल्पाऽवश्यायु-अल्पोत्तिङ्ग पनक दक मृत्तिका मर्कट सन्तानकेषु । इहाऽण्डकानि पिपीलिकाऽऽदीनाम् । प्राणाः-द्वीन्द्रियादयः, बीजम्-अनङ्कुरितम् , तदेवाऽङ्कुरितोद्भिन्नं हरितं , अवश्यायः-स्नेहः-उत्तिङ्गः-कीटिकानगरम् , पनक-पञ्चवर्णः साङ्कुरोऽनङ्कुरो वा अनन्त वनस्पति विशेषः, दक-मृत्तिका-सचित्तो मिश्रो वा कर्दमः, मर्कटकः-कोलिकस्तस्य सन्तानकं जालकम् । अल्पशब्दश्चेह सर्वत्राऽभाव वचनः, ततोऽण्डरहितेषु प्राणरहितेषु इत्यादि मन्तव्यम् , अहेसवणमायाए, इति-अधः श्रवणमात्रया-श्रवणयोरधस्तात्-यत्र छादन तृणादीनि भवन्ति तथा प्रकारे उपाश्रये नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा हेमन्त ग्रीष्मेषु वस्तुम् अष्टावृतुबद्धमासान् इत्यर्थः ॥

एवं प्रतिषेध सूत्रमभिधाय प्रपञ्चितज्ञविनेयाऽनुग्रहाऽर्थं विधिसूत्रमाह-अथ तृणेषु वा यावदल्प सन्तानकेषु उपरिश्रवण मात्रया युक्तेषु तथाविधोपाश्रये कल्पते हेमन्त ग्रीष्मेषु वस्तुम् । एवमृतुबद्ध सूत्रद्वयं व्याख्यातम् । अथ वर्षा वास सूत्रद्वयं व्याख्यायते-अथ तृणेषु वा तृणपुञ्जेषु वा यादल्प० सन्तानकेषु "अधेरयणी मुक्क मउडेसु" इति अञ्जलिमुकुलितं बाहुद्वयमुच्छ्रितं मुकुट उच्यते सहस्तद्वय प्रमाणः । रत्निभ्यां-हस्ताभ्यां मुक्ताभ्याम् उच्छ्रिताभ्यां यो निामतो मुकुटः स रत्निमुक्त मुकुटः, एतावत्प्रमाणमधस्तादुपरि च यत्राऽन्तरालं न प्राप्यते तेष्वधोरत्निमुक्त मुकुटेषु तृणादिषु न कल्पते वर्षावासे वस्तुम् ॥ अथ तृणेषु वा यादल्प० सन्तानकेषु उपरि रत्नि मुक्त मुकुटेषु यथोक्त प्रमाणेषु मुकुटोपरिवर्तिषु संस्तारके निविष्टस्य साधोरर्द्ध तृतीय हस्ताद्यपान्तरालयुक्तेषु-इत्यर्थः । ईदृश्यां वसतौ कल्पते वर्षावासे वस्तुमिति सूत्र चतुष्टयार्थः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

इति कल्पसूत्रस्य सटीकस्य चतुर्थ उद्देशः समाप्तः ॥



# अथ पंचम उद्देशकः

मूल—"देवे य इत्थिरूवं विउव्वित्ता निग्गंथं पडिग्गाहिज्जा तं च निग्गंथे साइज्जेज्जा, मेहुण पडिसेवणप्पत्ते आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं ॥ १ ॥

मूल—"देवी य इत्थीरूवं विउव्वित्ता निग्गंथं पडिगाहिज्जा, तं च निग्गंथे साइज्जेज्जा मेहुणपडिसेवणप्पत्ते आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं ॥ २ ॥

मूल—"देवी य पुरिसरूवं विउव्वित्ता निग्गंथिं पडिग्गाहेज्जा, तं च निग्गंथी साइज्जेज्जा, मेहुणपडिसेवणप्पत्ता आवज्जइ चाउम्मासियं अणुग्घाइयं ॥ ३ ॥

मूल—"देवे य पुरिसरूवं विउव्वित्ता निग्गंथीं पडिगाहिज्जा, तं च निग्गंथी साइज्जिज्जा, मेहुण पडिसेवणपत्ता आवज्जइ चाउम्मासियं अणुग्घाइयं ॥ ४ ॥

टीका-देवश्च स्त्री रूपं विकुर्व्य निर्ग्रन्थं प्रतिगृह्णीयात्, तच्च निर्ग्रन्थो मैथुन प्रति सेवनप्राप्तो यदि स्वादयेत्-अनुमोदयेत् तत आपद्यते चातुर्मासिकं परिहारस्थानम् अनुद्घातिकम् ॥ १ ।

एवं द्वितीयसूत्रं-देवी स्त्रीरूपं विकुर्व्य निर्ग्रन्थं प्रतिगृह्णीयादित्याद्यपि मन्तव्यम् ।२।

तृतीय सूत्रम्-देवी पुरुषस्यरूपं विकुर्व्य निर्ग्रन्थीं प्रतिगृह्णीयात्, तच्च निर्ग्रन्थी स्वादयेत्, मैथुन प्रतिसेवन प्राप्ता आपद्यते चातुर्मासिकमनुद्घातिकं स्थानम् ॥३॥

टीका--एवं देवः पुरुषरूपं विकुर्व्य निर्ग्रन्थीं प्रतिगृह्णीयादित्याद्यपि चतुर्थसूत्रं वक्तव्यम् । एष सूत्र चतुष्टयार्थः ॥ ४ ॥

मूल--"भिक्खू य अहिगरणं कट्टु तं अहिगरणं अविओसवित्ता इच्छिज्जा अन्नं गणं उवसंपज्जित्ताणं विहरित्तए, कप्पइ तस्स पंचराइंदियं छेयं कट्टु, परिनिव्वाविय परिनिव्वाविय दोच्चं पि तमेव गणं पडिनिज्जाएअव्वे सिया, जहा वा तस्स गणस्स पत्तियं सिया ॥ ५ ॥

टीका--भिक्षुः-च शब्दादाचार्य उपाध्यायो वाऽधिकरणं कृत्वा तदधिकरणमव्यवशमय्य इच्छेद् अन्यं गणमुपसम्पद्य विहर्तुम् । ततः कल्पते 'तस्य' अन्यगणमुपसंक्रान्तस्य पञ्चरात्रिन्दिवं छेदं कर्तुम् । ततः परिनिर्वाप्य परिनिर्वाप्य-कोमल वचः सलिलसेकेन कषायाग्नि सन्तप्तं सर्वतः शीतलीकृत्य द्वितीयमपिवारं तमेवगणं स प्रतिनिर्यातव्यः,-नेतव्यः स्यात् । यथा वा तस्य गणस्य प्रीतिकं स्यात् तथा कर्तव्यम् ॥ एष सूत्रार्थः ॥ ५ ॥

मूल--"भिक्खू य उग्गय वित्तीए अणत्थमिय संकप्पे संथडिए निव्वितिगिच्छे असणं वा ४ पडिग्गाहित्ता आहारं आहारेमाणे अहपच्छा जाणिज्जा--अणुग्गए सूरिए अत्थमिए वा, से जं च मुहे जं च पाणिंसि जं च पडिग्गहे तं विगिंचमाणे वा विसोहेमाणे वा नो अइक्कमइ, तं अप्पणा भुंजमाणे अण्णेसिं वा दलमाणे राइभोयण पडिसेवणप्पत्ते आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं ॥ ६ ॥ (१)

मूल--"भिक्खू य उग्गय वित्तीए अणत्थमिय संकप्पे संथडिए वितिगिच्छासमावन्ने असणं वा ४ पडिग्गाहित्ता आहारं आहारमाणे जाव अन्नेसिं वा दलमाणे राइभोयण पडिसेवणप्पत्ते आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं ॥ ७ ॥ (२)

मूल--"भिक्खू य उग्गयवित्तीए अणत्थमियसंकप्पे असंथडिए निव्वितिगिच्छे असणं वा ४ पडिगाहित्ता आहारं आहारेमाणे जाव अन्नेसिं वा दलमाणे राइभोयण पडिसेवणप्पत्ते आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं ॥ ८ ॥ (३)

मूल—"भिक्खू य उग्गयवित्तीए अणत्थमियसंकप्पे असंथडिए वि-इगिच्छासमावन्ने असणं वा ४ पडिग्गाहित्ता आहारमाहारेमाणे जाव अन्नेसिं वा दलमाणे राइभोयण पडिसेवणपत्ते आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं ॥ ६ ॥ (४)

टीका—भिक्षुः पूर्ववर्णितः, चशब्दादाचार्य उपाध्यायश्च परिगृह्यते, उद्गत आदित्ये वृत्तिः—जीवनोपायो यस्य स उद्गतवृत्तिकः, पाठान्तरं वा—उग्गयमुत्तीए त्ति, मूर्तिः शरीरम्, उद्गते रवौ प्रतिश्रयावग्रहाद् बहिः प्रचारवती मूर्तिरस्य इति उद्गतमूर्तिकः—मध्यमपदलोपी समासः। अनस्तमिते सूर्ये सङ्कल्पो—भोजनाभिलापो यस्य सोऽनस्तमित सङ्कल्पः। संस्तृतो नाम—समर्थस्तद्दिवसं पर्याप्त भोजी वा। नि-र्विचिगिच्छे इति विचिकित्सा चित्तविप्लुतिः—सन्देह इत्येकोऽर्थः, सा निर्गता यस्मात् स निर्विचिकित्सः—उदितोऽनस्तमितो वा रविरित्येवं निश्चयवान् इत्यर्थः। एवंविध विशेषणयुक्तोऽशनं वा पानं वा खादिमं वा स्वादिमं वा प्रतिगृह्य आहारम् 'आहरन्' भुञ्जानोऽथ पश्चादेवं जानीयात्—अनुद्गतः सूर्योऽस्तमितो वा। एवं विज्ञाय 'से' तस्य यच्च मुखे प्रतिक्षिप्तं यच्च पाणावुत्पाटितं यच्च प्रतिग्रहे स्थितं तद् विविञ्चन् वा (विविचन् वा) परिष्ठापयन् 'विशोधयन् वा निरवयवं कुर्वन् 'नो' नैव भगवतामाज्ञा-मतिक्रामति। तद् अशनादिकम् आत्मना भुञ्जानोऽन्येषां वा ददानो रात्रिभोजन-प्रतिसेवन प्राप्त आपद्यते चातुर्मासिकं परिहारस्थानमनुद्घातिकम् ॥ ६ ॥ १ ॥

एवमपरमपि सूत्र त्रयं मन्तव्यम्। नवरं द्वितीय सूत्रे—संस्तृतो—विचिकित्सा-समापन्नश्च यो भुंक्ते। विचिकित्सा—समापन्नो नाम 'किमुदितोऽनुदितो वा रविः'? अथवा—अस्तमितोऽनस्तमितो वा ?, इति सन्देहदोलायमानमानसः। एवं भुञ्जा-नस्य अन्येषां वा ददानस्य चतुर्गुरुकम् ॥ ७ ॥ २ ॥

तृतीय सूत्रे 'असंथडिये' इति 'असंस्तृतः' अध्वप्रतिपन्नः क्षपको ग्लानो वा भण्यते, स निर्विचिकित्सः, नियमादनुद्गतोऽस्तमितो वा रविः इत्येवं निस्सन्देहं जानानो ? (जानन्) यदि भुंक्ते तदपि चतुर्गुरुकम्। शेषं प्रथम सूत्रवत् ॥ ८ ॥ ३ ॥

चतुर्थ सूत्रे—असंस्तृतो विचिकित्सासमापन्नश्च यो भुंक्ते स आपद्यते चातु-र्मासिकं परिहारस्थानमनुद्घातिकम् ॥ एष सूत्र चतुष्टयार्थः ॥ ६ ॥ ४ ॥

मूल—"इह खलु निग्गंथस्स वा निग्गंथीए वा राओ वा वियाले वा

सपाणे सभोयणे उग्गाले आगच्छेज्जा, तं विगिंचमाणे वा विसोहेमाणे वा नो अइक्कमइ। तं उग्गिलित्ता पच्चोगिलमाणे राइभोयण पडिसेवमाणपत्ते आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं ॥ १० ॥

टीका--इह, अस्मिन् मौनीन्द्रे प्रवचने ग्रामादौ वा वर्त्तमानस्य 'खलु', वाक्यालङ्कारे निर्ग्रन्थस्य वा निर्ग्रन्थ्या वा रात्रौ वा विकाले वा सहपानेन सपानः सह भोजनेन सभोजन उद्गार आगच्छेत्। किमुक्तं भवति ? सिक्थ विरहितमेकं पानीयमुद्गारेण सहागच्छति, कूरसिक्थं वा केवलमागच्छति, कदाचिदुभयं वा। तमुद्गारं विविञ्चन् वा सकृत्परित्यजन् 'विशोधयन् वा बहुशः परित्यजन् नो आज्ञामतिक्रामति' तमुद्गीर्य 'प्रत्यवगिलन्' भूयोऽप्यास्वादयन् आपद्यते चातुर्मासिकं परिहारस्थानमनुद्घातिकम्। एष सूत्राऽर्थः ॥ १० ॥

मूल--"निग्गंथस्स य गाहावइकुलं पिंडवाय पडियाए अणुप्पविट्ठस्स अंतोपडिग्गहंसि पाणाणि वा बीयाणि वा रए वा परियावज्जेज्जा, तं च संचाएइ विगिंचित्तए वा विसोहित्तए वा, तं पुव्वामेव लाइया विसोहिया तओ संजतामेव भुंजेज्ज वा पिएज्ज वा। तं च नो संचाएइ विगिंचित्तए वा विसोहित्तए वा तं नो अप्पणा भुंजेज्जा नो अन्नेसिं दावए एगंते बहुफासुए पएसे पडिलेहित्ता पमज्जित्ता परिट्ठवियव्वे सिया ॥ ११ ॥

टीका--निर्ग्रन्थस्य गृहपतिकुलं पिण्डपातप्रतिज्ञया अनुप्रविष्टस्याऽन्तः प्रतिग्रहे प्राणा वा बीजानि वा रजो वा परि-समन्तादापतेयुः। 'तच्च प्राणादिकं यदिशक्नोति विवेक्तुं वा विशोधयितुं वा ततः-'तत् प्राणादिजातादिकं लात्वा-हस्तेन गृहीत्वा विशोध्य २-सर्वथैवापनीय ततः संयत प्रयत्नपर एव भुञ्जीत वा पिवेद्वा। तच्च नः शक्नोति विवेक्तुं वा विशोधयितुं वा तन्नात्मना भुञ्जीत, नवाऽन्येषां दद्यात्, किन्तु एकान्ते बहुप्राशुके प्रदेशे प्रत्युपेक्ष्य प्रमृज्य परिष्ठापयितव्यं स्यादिति सूत्रार्थः ॥११॥

मूल--"निग्गंथस्स य गाहावइकुलं पिंडवाय पडियाए अणुप्पविट्ठस्स अंतोपडिग्गहंसि दए वा दगरए वा दगफुसिए वा परियावज्जेज्जा, से य उसिणे भोयणजाते भोत्तव्वे सिया, से य सीए भोयणजाते तं नो अप्पणा भुंजेज्जा, नो अन्नेसिं दावए, एगंते बहुफासुए पदेसे परिट्ठवेयव्वे सिया। १२।

टीका –निर्ग्रन्थस्य गृहपतिकुलं पिण्डपात प्रतिज्ञयाप्रविष्टस्यान्तःप्रतिग्रहे भक्त-पानमध्ये 'दकं वा' प्रभूताप्कायरूपं दकरजो वा, उदकविन्दुः 'दकस्पर्शितं वा, उदकशीकराः पर्यापतेयुः। तच्चोष्णं भोजनजातं ततो भोक्तव्यंस्यात्। अथ शीतं तद् भोजनजातं ततस्तन्नात्मना भुञ्जीत, नान्येषांदद्यात, एकान्ते बहुप्राशुके प्रदेशे परिष्ठापयितव्यं स्यादिति सूत्रार्थः॥ १२॥

मूल–निग्गंथीए राओ वा वियाले वा उच्चारं वा पासवणं वा विगिंच माणीए वा विसोहेमाणीए वा अन्नयरे पसुजाइए वा पक्खिजाइए वा अन्नयरं इंदियजायं परामुसेज्जा, तंच निग्गंथी साइज्जेज्जा, हत्थकम्म पडिसेवणप्पत्ता आवज्जइ मासियं अणुग्घाइयं॥ १३॥

मूल–निग्गंथीओ राओ वा वियाले वा उच्चारं वा पासवणं वा विगिंचमाणीए वा विसोहेमाणीए वा अन्नयरे पसुजाइए वा पक्खिजाइ-ए वा अन्नयरंसि सोयंसि ओगाहिज्जा, तंच निग्गंथी साइज्जेज्जा, मेहुण-पडिसेवणप्पत्ता आवज्जइ चाउमासियं अणुग्घाइयं॥ १४॥

टीका–निर्ग्रन्थ्या रात्रौ वा विकाले वा उच्चारं वा प्रस्रवणं वा विविचिन्त्या वा विशोधयन्त्या वा अन्यतरः पशुजातीयो वा वानरादिकःपक्षिजातीयो वा, मयूरादि-कोऽन्यतरदिन्द्रिय जातं 'परामृशेत्, स्पृशेत्, सा च निर्ग्रन्थी तं च स्पर्शं स्वादयेत्-सुन्दरोऽस्य स्पर्श इत्यनुमन्येत, हस्तकर्म प्रतिसेवन प्राप्ता आपद्यते मासिकमनुद्-घातिकं स्थानम्। इह निर्ग्रन्थीनां परिहारतपो न भवतीति कृत्वा 'परिहारट्ठाणं' इतिपदं न पठनीयम्॥ एवं द्वितीयसूत्रमपि व्याख्येयम्। नवरम्–स्रोतसि–योन्यादौ वानरादिरवगाहेत। सा च मैथुन प्रतिसेवनप्राप्ता यदि स्वादयेत् ततश्चतुर्गुरुकमिति सूत्रार्थः॥ १३॥ १४॥

मूल–नो कप्पइ निग्गंथीए एगाणियाए गाहावइकुलं पिंडवाय पडि-याए निक्खमित्तए वा पविसित्तए वा, बहिया वियार भूमिं वा विहारभूमिं वा निक्खमित्तए वा पविसित्तए वा एवं गामाणुगामं वा दूइज्जित्तए वासा-वासं वा वत्थए॥ १५॥

टीका–नो कल्पते निर्ग्रन्थ्या एकाकिन्या गृहपतिकुलं पिण्डपात प्रतिज्ञया निष्क-

मितुं वा प्रवेष्टुं वा बहिर्विचारभूमौ वा विहारभूमौ वा निष्क्रमितुं वा प्रवेष्टुं वा ग्रामानुग्रामं वा द्रोतुं-विहर्तुम् वर्षावासं वा वस्तुमिति सूत्रार्थः ॥ १५ ॥

मूल—नो कप्पइ निग्गंथीए अचेलियाए हुं (हो) तए ॥ १६ ॥

टीका—नो कल्पते निर्ग्रन्थ्या अचेलिकाया वस्त्ररहिताया भवितुमिति एषसूत्रार्थः।१६।

मूल—नो कप्पइ निग्गंथीए अपाइयाए हुंतए ॥ १७ ।

टीका—नो कल्पते निर्ग्रन्थ्या अपात्रायाः-पात्र रहिताया भवितुमिति सूत्रार्थः।१७।

मूल—नो कप्पइ निग्गंथीए वोसट्ठकाइयाए हुंतए ॥ १८ ॥

टीका—नो कल्पते निर्ग्रन्थ्या व्युत्सृष्टकायिकायाः-परित्यक्तदेहाया भवितुमिति सूत्रार्थः ॥ १८ ॥

मूल—नो कप्पइ निग्गंथीए वहिया गामस्स वा जाव सन्निवेसस्स वा उड्ढं वाहाओ पगिज्झिय पगिज्झिय सूराभिमुहीए एगपाइयाए ठिच्चा आयावणाए आयावित्तए। कप्पइ से उवस्सयस्स अंतोवगडाए संवाडिपडिवद्धाए पलंबिय वाहियाए समतल पाइयाए ठिच्चा आयावणाए आयावित्तए ॥१९॥

टीका—नो कल्पते निर्ग्रन्थ्या वहिर्ग्रामस्य वा यावत्संनिवेशस्य वा ऊर्द्ध्वम्-ऊर्द्ध्वार्ऽभिमुखौ वाहू प्रगृह्य-प्रगृह्य प्रकर्षेण गृहीत्वा-कृत्वेत्यर्थः। सूर्याभिमुख्या एकपादिकायाः, एकं पादमुर्द्ध्वं कृत्वाऽऽकुञ्च्य च अपरमेकं पादं भुविकृतवत्या एवंविधायाः स्थित्वाऽऽतापनयाऽऽतापयितुम्। किन्तु कल्पते से-तस्या उपाश्रयस्याऽन्तर्वगडायां (सङ्घाटी प्रतिवद्धायाः) प्रलम्बित वाहायाः समतल पादिकायाः स्थित्वा आतापनया आतापयितुमिति सूत्रार्थः ॥ १९ ॥

मूल—नो कप्पइ निग्गंथीए ठाणाइयाए हुंतए ॥ २० ॥

मूल—"नो कप्पइ निग्गंथीए पडिमट्ठाइयाए हुंतए ॥ २१ ॥

मूल—"एवं ने सज्जियाए ॥ २२ ॥ उक्कुडुगासणियाए ॥२३॥ वीरासणियाए ॥२४॥ दंडासणियाए ॥२५॥ लगंडसाइयाए ॥२६॥ ओमंथियाए ॥२७॥ उत्ताणियाए ॥२८॥ अंवखुज्जियाए ॥२९॥ एगपासियाए।३०।

टीका—नो कल्पते निर्ग्रन्थ्याः स्थानायताया भवितुम् ॥ २० ॥ एवं प्रतिमास्थायिन्याः। नैषधिकायाः। उत्कटिकासनिकायाः। वीरासनिकायाः। दण्डासनिकायाः।

लगण्डशायिन्याः। अवाङ्मुखायाः। उत्तानिकायाः। आम्रकुब्जिकायाः। एकपार्श्वशायिन्याः॥ इति सूत्राक्षरार्थः॥२१-२२-२३-२४-२५-२६-२७-२८-२९-३०॥

मूल-"नो कप्पइ निग्गंथीणं आकुञ्चणपट्टगं धारित्तए वा परिहरित्तए वा। कप्पइ निग्गंथाणं आकुंचणपट्टगं धारित्तए वा परिहरित्तए वा।३१।

टीका-"नो कल्पते निर्ग्रन्थीनाम् आकुञ्चनपट्ट-पर्यस्तिकापट्टं धारयितुं वा परिहर्तुं वा। कल्पते निर्ग्रन्थानामाकुञ्चनपट्टं धारयितुं वा परिहर्तुं वेति सूत्रार्थः॥३१।

मूल-"नो कप्पइ निग्गंथीणं सावस्सयंसि आसणंसि आसइत्तए वा तुयट्टित्तए वा। कप्पइ निग्गंथाणं सावस्सयंसि आसणंसि आसइत्तए वा तुयट्टित्तएवा॥३२॥

टीका--सावश्रयं नाम-यस्य पृष्ठतोऽवष्टम्भो भवति, एवंविधे आसने निर्ग्रन्थीनां नोकल्पते आसितुं वा त्वग्वर्तितुं वा। कल्पते निर्ग्रन्थानां सावश्रये आसने आसितुं वा त्वग्वर्तितुं वा। निर्ग्रन्थ्यस्तु तादृशे आसने यदि उपविशन्ति शेरते वा तदा त एव गर्वादयो दोषाश्चतुगुरु च प्रायश्चित्तम्। द्वितीयपदेऽल्पसागारिके स्थविरा ग्लाना वा उपविशेयुः। निर्ग्रन्थानामपि न कल्पते। यदि उपविशन्ति तदाचतुर्लघु। सूत्रंतु कारणिकम्। तदेव कारणमाह--"सावस्सए इत्यादि पश्चार्द्धम्। यो वृद्धआचार्यः सः 'पूर्वकृते' गृहस्थैः स्वार्थं सम्पादिते सावश्रयेऽप्यासने उपविष्टः 'असागारिके एकान्ते वाचयेत् विनेयानां वाचनां दद्यात्॥ ३२॥

मूल-"नो कप्पइ निग्गंथीणं सविसाणंसि पीढंसि वा फलगंसि वा आसइत्तए वा तुयट्टित्तए वा। कप्पइ निग्गंथाणं सविसाणंसि पीढंसि वा फलगंसि वा आसइत्तए वा तुयट्टित्तए वा॥ ३३॥

टीका--सविषाणं नाम-यथा कपाटस्योभयतः शृङ्गे भवतः एवं यत्र भिसिकादौ पीठे फलके वा विषाणं शृङ्गं भवति तत्र निर्ग्रन्थीनामासितुं वा शयितुं वा न कल्पते। निर्ग्रन्थानां तु कल्पते। निर्ग्रन्थ्यस्तु सविषाणे पीठे फलके वा यद्युपविशन्ति शेरते वा तदा चतुर्गुरु आज्ञादयश्च दोषाः॥ ३३॥

मूल-नो कप्पइ निग्गंथीणं सवेंटयं लाउयं धारित्तए वा परिहरित्तए वा। कप्पइ निग्गंथाणं सवेंटयं लाउयं धारित्तए वा परिहरित्तए वा॥३४॥

टीका--अस्य व्याख्या सुगमा। नवरम्-'सवेंटियं' नालयुक्तमलाबुकं तन्निर्ग्रन्थीनां न कल्पते। निर्ग्रन्थानान्तु कल्पते॥ ३४॥

मूल–नो कप्पइ निग्गंथीणं सवेंटियं पायकेसरियं धारित्तए वा परिहरित्तए वा । कप्पइ निग्गंथाणं सवेंटियं ( टया ) पादकेसरियं ( रया ) धारित्तए वा परिहरित्तए वा ॥ ३५ ॥

टीका–नो कल्पते निर्ग्रन्थीनां सवृन्तिका पादकेसरिका[1] धारयितुं वा परिहर्तुंवा । कल्पते निर्ग्रन्थानां सवृन्तिका[2] पादकेसरिका धारयितुं वा परिहर्तुं वा ॥ ३५ ।

मूल–नो कप्पइ निग्गंथीणं दारुदंडयं पायपुंछणं धारित्तए वा परिहरित्तए वा । कप्पइ निग्गंथाणं दारुदंडयं जाव परिहरित्तए वा ॥ ३६ ॥

टीका––यत्र दारुमयस्य दण्डस्याग्रभागे ऊर्णिका दशिका बध्यन्ते तद् दारुदण्डकं पादप्रोञ्छनमुच्यते । तद् निर्ग्रन्थीनां न कल्पते । निर्ग्रन्थानां तु कल्पते ॥ ३६ ॥

मूल–नो कप्पइ निग्गंथाण वा निग्गंथीण वा अन्नमन्नस्स मोयं आइयत्तए वा आइमित्तए वा नन्नत्थ गाढाऽगाढेसु रोगायंकेसु ॥ ३७ ॥

टीका–नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा अन्योन्यस्य–परस्परस्य मोकमापातुं वा आचमितुं वा । किं सर्वथैव ? न, इत्याह–गाढाः–अहि–विष–विसूचिकादयः अगाढाश्च, ज्वरादयो रोगातङ्कास्तेभ्योऽन्यत्र न कल्पते, तेषु तु कल्पते, इत्यर्थः । एष सूत्रार्थः ॥ ३७ ॥

मूल–नो कप्पइ निग्गंथाण वा निग्गंथीण वा पारियासियस्स आहारस्स जाव तयप्पमाण मित्तमवि भूइप्पमाण मित्तमवि बिंदुप्पमाण मित्तमवि आहारं आहारित्तए, नन्नत्थ आगाढेसु रोगायंकेसु ॥ ३८ ॥

टीका––नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा परिवासितस्य, रजन्यां स्थापितस्याहारस्य मध्यात् त्वक् प्रमाणमात्रमपि भूति प्रमाणमात्रमपि बिन्दु प्रमाण मात्रमपि यावदाहारमाहर्तुम् । इह त्वक् प्रमाणमात्रं नाम–तिलतुषत्रिभागमात्रम् तच्चाशनस्य घटते, भूति ( भस्म ) प्रमाणमात्रं सक्तुकादीनां नेयम् । बिन्दु प्रमाण मात्रं पानकस्य । इदमेवाऽपवदति–आगाढेभ्यो रोगाऽऽतङ्केभ्योऽन्यत्र न कल्पते । तेषु पुनः कल्पत इति सूत्रार्थः ॥ ३८ ॥

---

१ पादकेसरियाणाम उहरयं चीरं । असईएचीराणं दारुएवव्हति । इति चूर्णिः ।

२ यत्राभिनवसङ्कटमुखे अलाबुनि हस्तो न माति तस्यालाबुनोऽदृढच्चत्वं तत्प्रमाणो दण्डः क्रियते, तस्याग्रभागे दशा या प्रत्युपेक्षणिका सा पादकेसरिका सवृन्ता भण्यते । बृ० टी०

मूल—नो कप्पइ निग्गंथाण वा निग्गंथीण वा पारियासिएणं आलेवण जाएणं (गायाइं) आलिंपित्तए वा विलिंपित्तए वा नन्नत्थ आगाढेहिं रोगायंकेहिं ॥ ३६ ॥

टीका—नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा परिवासितेनाऽऽलेपनजातेन 'आलेपयितु' वा ईषल्लेपयितुं वा, विलेपयितुं वा–विशेषेण लेपयितुं वा नाऽन्यत्र आऽऽगाढेभ्यो रोगाऽऽतङ्केभ्य इति सूत्रार्थः ॥ ३६ ॥

मूल—नो कप्पइ निग्गंथाण वा निग्गंथीण वा पारियासिएणं तेल्लेण वा घएण वा नवणीएण वा वसाए वा गायं अब्भंगित्तए वा मक्खित्तए वा नन्नत्थ गाढागाढेहिं रोगायंकेहिं ॥ ४० ॥

टीका—नो कल्पते परिवासितेन तैलेन वा घृतेन वा नवनीतेन वा वसया वा गात्रम् 'अभ्यङ्क्तु' वा, बहुकेन तैलादिना, म्रक्षितुं वा–स्वल्पेन तैलादिना, नान्यत्र गाढाऽगाढेभ्यो रोगातङ्केभ्यः तान् मुक्त्वा न कल्पते। दोषाश्चात्र त एव सञ्चयादयो मन्तव्याः ॥ ४० ॥

मूल—"परिहार कप्पट्ठिए भिक्खू बहिया थेराण वेयावडियाए गच्छेज्जा, से य आहच्च अइक्कमेज्जा, तं च थेरा जाणेज्जा, अप्पणो आगमेणं अन्नेसिं वा अंतिए सोमोच्चा तओ पच्छा तस्स अहालहुस्सए नाम ववहारे पट्ठवियव्वे सिया ॥ ४१ ॥

टीका—परिहार कल्पस्थितो भिक्षुः बहिः अन्यत्र नगरादौ स्थविराणाम्, आचार्याणामादेशेन वैयावृत्य(त्या)र्थं गच्छेत्, किमुक्तं भवति? अन्यस्मिन् गच्छे केषांचिदाचार्याणां वादी-नास्तिकादिक उपस्थितः, तेषां च नास्ति वादलब्धिसम्पन्नः, ततस्ते येषामाचार्याणां स परिहारिकस्तेषामन्तिके संघाटकं प्रेषयन्ति, सच संघाटको ब्रूते–वादिनं कमपि मुत्कलयत। एवमुक्ते ते–आचार्याः परिहारिकं परवादि निग्रहक्षमं मत्वा तत्र प्रेषयन्ति। ततस्तदादेशादसौ परिहार तपो वहमान एव तत्र गच्छेत्। इदंच महत्प्रवचनस्य–वैयावृत्यंयद् अग्लान्या परवादि निग्रहणम्। ततस्तदर्थं गतः स पारिहारिकः आहच्च, कदाचित् अतिक्रामेत्, पादधावनादिकं प्रतिसेवेत, तच्च प्रतिसेवनं 'स्थविराः' मौलाचार्या आत्मनः 'आगमेन' अवध्याद्यतिशयज्ञानेन

अन्येषां वाऽन्तिके श्रुत्वा जानीयुः ? ततःपश्चात् तत्परिज्ञानाऽनन्तरं 'तस्य' पारिहारिकस्य 'यथालघुस्वको नाम, स्तोक प्रायश्चित्तरूपो व्यवहारः प्रस्थापयितव्यः स्यादिति सूत्रार्थः ॥ ४१ ॥

मूल—"निग्गंथीए य गाहावइकुलं पिंडवायपडियाए अणुप्पविट्ठाए अन्नयरे पुलागभत्ते पडिग्गाहिए सिया, सा य संथरिज्जा, कप्पइ से तद्दिवसं तेणेव भत्तट्ठेणं पज्जोसवित्तए, नो से कप्पइ दोच्चंपि गाहावइकुलं पिंडवाय पडियाए पविसित्तए, सा य नो संथरेज्जा, एवं से कप्पइ दोच्चं पि गाहावइकुलं पिंडवाय पडियाए पविसित्तए ॥ ४२ ॥

टीका—निर्ग्रन्थ्या गृहपतिकुलं पिण्डपातप्रतिज्ञयाऽनुप्रविष्टया 'अन्यतरद्' धान्य-गन्ध-रसपुलाकानां-वल्ल विकट दुग्धादिरूपाणामेकतरं पुलाकभक्तं प्रतिगृहीतं स्यात्, साच तेनैव भुक्तेन 'संस्तरेत्' दुर्भिक्षाद्यभावात्-निर्वहेत्, ततः कल्पते तस्यास्तद्दिवसे 'सं०' तेनैव भक्तार्थेन 'पर्युषितुम्' निर्वाहयितुम्। नो से-तस्याः कल्पते द्वितीयमपि वारं गृहपतिकुलं पिण्डपातप्रतिज्ञया प्रवेष्टुम्। अथ सा न संस्तरेत्, ततः कल्पते तस्या द्वितीयमपि वारं गृहपतिकुलं पिण्डपातप्रतिज्ञया प्रवेष्टुमिति सूत्रार्थः ॥ ४२ ॥

"इति बृहत्कल्पसूत्रस्य पञ्चमोद्देशकः समाप्तः"



# अथ षष्ठ उद्देशकः

मूल—"नो कप्पइ निग्गंथाण वा निग्गंथीण वा इमाइं छ अवयणाइं वइत्तए, तं जहा—अलियवयणे १ हीलियवयणे २ खिंसियवयणे ३ फरुस-वयणे ४ गारत्थियवयणे ५ [1]विउसवियं वा पुणो उदीरित्तए ॥ १ ॥

टीका—पञ्चमोद्देशकस्यादिसूत्रं उक्तम्—"देवः स्त्रीरूपं कृत्वा साधुं भोगै-र्निमन्त्रयेत्" स च तान् भुक्त्वा गुरुसकाशमागत आलोचयेत्-दिव्यैर्भोगैः 'छन्दितः' निमन्त्रितोऽहं परं मया ते भोगा नेप्सिताः 'इति' एवं गौरवेण कश्चिदलीकं वदेत्। अत इदं षष्ठोद्देशकस्यादिसूत्रमारभ्यते। अनेन सम्बन्धेनायातस्यास्य व्याख्या—'नोकप्प०' इति वचनव्यत्ययात्—नो कल्पन्ते निर्ग्रन्थानां निर्ग्रन्थीनां वा इमानि प्रत्यक्षाऽऽसन्नानि षडिति-षट्संख्याकानि अवचनानि-नञः कुत्सार्थत्वात् अप्रशस्तानि वचनानि वदितुं-भाषितुम्। तद्यथा-अलीकवचनं १ हीलितवचनं २ खिंसितवच-नं ३ परुषवचनं ४ आगारिणो (आगारेऽश्रिताः)गृहिणः—तेषांवचनं ५ व्यवशमितं वा, उपशमितमधिकरणं पुनर्भूयोऽप्युदीरयितुं न कल्पते इतिप्रक्रमः। अनेन व्यवशमितस्य पुनरुदीरणावचनं नाम षष्टमवचनमुक्तम् इति सूत्र संक्षेपार्थः ॥ १ ॥

मूल—"कप्पस्स छ पत्थारा पन्नत्ता, तं जहा—पाणाइवायस्स वायं वयमाणे १ मुसावायस्स वायं वयमाणे २ अदिन्नादाणस्स वायं वयमाणे ३ अविरइय[2] वायं वयमाणे ४ अपुरिस वायं वयमाणे ५ दासवायं वयमाणे ६ इच्चेते कप्पस्स छ पत्थारे पत्थरेत्ता सम्मं अप्पडिपूरेमाणे तट्ठाणपत्ते सिया ॥ २ ॥

टीका—कप्पस्स—कल्पः-साधुसमाचारः, तस्य सम्बन्धिनः तद्विशुद्धिकारणत्वात् प्रस्तारा:-प्रायश्चित्तरचना विशेषाः षड्विधाः प्रज्ञप्ताः, तद्यथा-पाणाइ०-प्राणाति-

---

१—विओसवियं आ० मा०। २—अविरइया आ० मा०।

पातस्य वादं वार्तां वाचं वा वदति साधौ प्रायश्चित्तप्रस्तारो भवतीत्येकः ॥ १ ॥ मृषा०-एवं मृषावादस्य वादं वदति द्वितीयः ॥ २ ॥ अद्०-अदत्तादानस्य वादं वदति तृतीयः ॥ ३ ॥ अवि०-[1]अविरनियतं यद्वा न विद्यते विरतिरस्याः सा अविरतिका स्त्री सेवाल्पं तद्वादं वदति चतुर्थः ॥ ४ ॥ अपु०-अपुरुषः-नपुंसकः तद्वादं वदति पञ्चमः ॥ ५ ॥ दास-दासवादं वदति षष्ठः ॥ ६ ॥ इच्चेते-इतीति उपदर्शने-एवं प्रकारान् एतान् षट् कल्पस्य पत्थ० प्रस्तारान् प्रायश्चित्तरचनाविशेषान् मासगुर्वादयः पाराञ्चिकपर्यन्ताः (तान्) पत्थरे-प्रस्तीर्य । अभ्युपगमनम् (अभ्युपगम्य) आत्मनि प्रस्तुतान् विधाय प्रस्तारयिता वा अभ्याख्यान दाता साधुः सम्यगप्रतिपूरयन्, अभ्याख्येयार्थस्यासद्भूततया अभ्याख्यान समर्थनंकर्तुमशक्नुवन् । तस्यैव प्राणातिपातादिकर्तुरिव स्थानं प्राप्तः तत् स्थानप्राप्तः स्यात्, प्राणातिपातादिकारीव दण्डनीयो भवेत् इति भावः । अथवा प्रस्तारान् प्रस्तीर्य विरचय्य आचार्येण अभ्याख्यान दाता अप्रतिपूर्यन् अपराऽपर प्रत्ययवचनैस्तमर्थं सत्यमकुर्वन् 'तट्ठाण-त्तरस्थान प्राप्तः कर्तव्य इति शेषः । यत्र प्रायश्चित्तपदे विवदमानोऽवतिष्ठते-न पदान्तरमारभ्यते तत्पदं प्रापणीय इतिभावः । एष सूत्रार्थः ॥ २ ॥

मूल-"निग्गंथस्स य अहेपायंसि खाणू वा कंटए वा हीरे वा सक्करे वा परियावज्जेज्जा, तं च निग्गंथे नो संचाएज्जा नीहरित्तए वा विसोहित्तए वा, तं च निग्गंथी नीहरमाणी वा विसोहेमाणी वा णाइक्कमइ ॥ ३ ॥

मूल-"निग्गंथस्स य अच्छिंसि पाणे वा बीए वा रए वा परियावज्जेज्जा, तं च निग्गंथे नो संचाएज्जा[2] नीहरित्तए वा विसोहित्तए वा, तं च निग्गंथी नीहरमाणी वा विसोहेमाणी वा णाइक्कमइ ॥ ४ ॥

मूल-"निग्गंथीए य अहेपायंसि खाणू वा कंटए वा [3]हीरे वा सक्करे वा परियावज्जेज्जा, तं च निग्गंथी नो संचाएज्जा नीहरित्तए वा विसोहित्तए वा, तं च निग्गंथे नीहरमाणे वा विसोहेमाणे वा णाइक्कमइ ॥५॥

मूल-"निग्गंथीए य अच्छिंसिपाणे वा बीए वा रए वा परियावज्जेज्जा तं च निग्गंथी नो संचाएइ नीहरित्तए वा विसोहित्तए वा तं च निग्गंथे नीहरमाणे वा विसोहेमाणे वा णाइक्कमइ ॥ ६ ॥

---

१-अविरतिः-अव्र ग, यद्वानविद्यते विरतिरस्याः सा अविरतिका स्त्री आ० मा० ।

२-संचाएइ इ० कि० । ३ हीरए आ० मा० ।

अस्य सूत्र चतुष्टयस्य व्याख्या-

टीका--निग्ग०--निर्ग्रन्थस्य अधः पादे-पादतले स्थाणुर्वा कण्टको वा हीरो वा काचविशेषो वा शर्करा वा पर्यापतेत्-अनुप्रविशेत्, 'तंच नि०'-तच्च कण्टकादिकं निर्ग्रन्थो न शक्नुयात्नीहर्तुं वा-निष्काशयितुं वा 'विसो०-विशोधयितुं वा-निश्शेष-मपनेतुम्'' तंच नि०-तच्च निर्ग्रन्थी निर्हरन्ती वा विशोधयन्ती वा नातिक्रामति आज्ञा-मिति गम्यते, इति प्रथम सूत्रम् ॥ ३ ॥

टीका--निग्गं०-निर्ग्रन्थस्य 'अच्छिं' अक्षिण-लोचने प्राणा वा मशकादयः सूक्ष्माः 'वीए'--बीजानि वा सूक्ष्माणि श्यामाकादीनि 'रएवा' रजो वा-सचित्तमचित्तं वा पृथ्वीरजः, 'परि०'-पर्यापतेत्-प्रविशेत्, तच्च प्राणादिकं निर्ग्रन्थो न शक्नुयात् नीहर्तुमित्यादिप्राग्वत् ॥ ४ ॥

टीका--( तृतीय चतुर्थ सूत्रे निर्ग्रन्थी विषये एवमेव व्याख्यातव्ये ) इति सूत्र चतुष्टयार्थः ॥ ५ ॥ ६ ॥

**मूल--''निग्गंथे निग्गंथीं दुग्गंसि वा विसमंसि वा पव्वयंसि वा [1]पक्ख-लमाणिं वा पवडमाणिं वा गिण्हमाणे वा अवलंबमाणे वा णाइक्कमइ ।७।**

टीका--अस्य सूत्रत्रयस्य व्याख्या--निर्ग्रन्थो निर्ग्रन्थीं दुर्गे वा विषमे वा पर्वते वा, त्रिविधञ्च भवति दुर्गं तद्यथा--वृक्षदुर्गं श्वापददुर्गं, मनुष्यदुर्गं च। यद्वृक्षैरतीवगहनतया दुर्गमम् यत्र वा पथि वृक्षः पतितस्तद्वृक्षदुर्गम् । यत्रव्याघ्र-सिंहादीनांभयं तत्-श्वापददुर्गम् । यत्रम्लेच्छबोधिकादीनां मनुष्याणां भयं तद्-मनुष्यदुर्गम् । एतेषु त्रिष्वपि दुर्गेषु यदि निष्कारणे निर्ग्रन्थीं गृह्णाति अवलम्बते वा तदाचतुर्गुरु । त्रिविधञ्चभवति विषमम्-भूमिविषमम, श्वापद विषमम्, मनुष्यविषमं-च । भूमिविषमं नाम गर्तापाषाणाद्याकुलो भूभागः, श्वापदमनुष्यविषमे तु श्वापदमनुष्यदुर्गवज्ज्ञेये । अत्र भूमिविषमेणाधिकारः, पव्व० पर्वतपदं तु प्रतीतत्वात् न व्याख्यातम् 'पक्खलमाणं'-प्रकर्षेण स्खलद् गत्यागच्छन्तीं भूमौ असम्प्राप्तां वा पतन्तीं पतितुकामामित्यर्थः। पव०--प्रकर्षेण भूमौ सर्वैरपिगात्रैः पतन्तीं, 'गिण्ह०-बाह्वादावङ्गे गृह्णन वा, अवलम्बमानो वा बाह्वादौगृहीत्वा

[1]--पक्खुलमाणिं आ० भ०।

धारयन् अथवा गृह्णन् सर्वाङ्गीणां धारयन्, अवलम्बमानो देशतः करेण गृह्णन्-साहयन् इत्यर्थः-नातिक्रामति स्वाचारमाज्ञां वा इति प्रथम सूत्रम् ॥ ७ ॥

**मूल-"निग्गंथे निग्गंथीं सेयंसि वा पंकंसि वा पणगंसि वा उदयंसि वा ओकसमाणिं वा ओवुज्झमाणिं वा गिण्हमाणे वा अवलंबमाणे वा नाइक्कमइ ॥ ८ ॥**

टीका--व्याख्या पूर्ववत्-'नवरम्-सेयं-सेको नाम पङ्कपनके वा सजले यत्र निमज्ज्यते तत्र वा, पंक-पङ्कः कर्दमः, तत्र वा, पनको नाम आगन्तुकः प्रतनुद्रवरूपः कर्दम एव तत्र वा, उदकं-प्रतीतम्, तत्र वा, उक्कसमा०-अपकसन्तीं वा पङ्कपनकयोः परिदसन्तीं[1] ओवुज्झ०-अपोह्यमानां वा, सेकेन-उदकेन वा नीयमानां गृह्णन् वा अवलम्बमानो वा नातिक्रामति ॥ ८ ॥

**मूल-"निग्गंथे निग्गंथिं नावं [2]आरोहमाणिं वा उरोहमाणिं वा गिण्हमाणे वा अवलंबमाणे वा नाइक्कमइ ॥ ९ ॥**

टीका--तृतीयसूत्रे निर्ग्रन्थीमेव नावम् आरोह०-आरोहन्तीम् ( आरूढमानाम् ) उरो० अवरोहन्तीम्-नाव्युत्तरमाणाम्, गिण्ह०-गृह्णन् वा अवलम्बमानो वा नातिक्रामति, इति सूत्रार्थः ॥ ९ ॥

**मूल-"खित्तचित्तं निग्गंथिं निग्गंथे गिण्हमाणे वा अवलंबमाणे वा नाइक्कमइ ॥ १० ॥**

टीका--खित्तचित्तं ति-क्षिप्तं-नष्टं रागभयाऽपमानैश्चित्तं यस्याः सा क्षिप्तचित्ता, ताम् निर्ग्रन्थीं वा निर्ग्रन्थोगृह्णानो वा अवलम्बमानो वा नातिक्रामत्याज्ञामिति सूत्रार्थः ॥ १० ॥

**मूल-"दित्तचित्तं निग्गंथिं निग्गंथे गिण्हमाणे वा अवलंबमाणे वा नाइक्कमइ ॥ ११ ॥**

टीका--दित्त०-अस्य व्याख्या प्राग्वत्, 'नवरम्'-दीप्तचित्ता-लाभादिमदेन परवशीभूतहृदया ताम् ॥ ११ ॥

---

१-परिहलसन्तीं आ० भा० । २-आरुममाणिं वा ओरुममाणिं वा आ० भा० ।

मूल—"जक्खाइट्ठं" निग्गंथिं निग्गंथे गिण्हमाणे वा अवलंबमाणे वा नाइक्कमइ ॥ १२ ॥

टीका—जक्खा०—अस्य व्याख्या प्राग्वत्, नवरम्—यक्षाविष्टाम्—यक्षो देवता-पूर्वसंस्तुतादिः । तेनाऽधिष्ठिताम् , इति ॥ १२ ॥

मूल—उम्मायपत्तं निग्गंथिं निग्गंथे गिण्हमाणे वा अवलंबमाणे वा नाइक्कमइ ॥ १३ ॥ उवसग्गपत्तं निग्गंथिं निग्गंथे गिण्हमाणे वा अवलंबमाणे वा नाइक्कमइ ॥ १४ ॥

टीका—अस्य सूत्रद्वयस्य व्याख्या प्राग्वत् । नवरम्—उन्मादप्राप्ताम् ॥ १३ ॥ उवसग्ग—उपसर्गप्राप्ताम् ॥ १४ ॥

मूल—"साहिगरणं निग्गंथिं निग्गंथे गिण्हमाणे वा अवलंबमाणे वा नाइक्कमइ ॥ १५ ॥

टीका—साहि०—अस्य व्याख्या प्राग्वत्, अत्र भाष्यम्—उप्पन्ने इति संयत्या गृहस्थेनसममधिकरणे उत्पन्ने द्विविधमतिक्रमं दृष्ट्वा तस्याधिकरणस्य व्यवशमनं कर्तव्यम् किमुक्तं भवति ? स गृहस्थोऽनुपशान्तः सन् तस्याः संयत्याः संयमभेदं जीवितभेदं चेति द्विविधमतिक्रमं कुर्यात्, तदुपशमयितव्यमधिकरणम् । कथमित्याह—यस्तस्याः संयत्याः प्रतिपक्षो गृहस्थः तस्य प्रथमतः कोमलवचनैरनुशासनं कर्तव्यम् । तथाप्यतिष्ठति भीषणं-भापणं कर्त्तव्यम, तथाप्यभिभवतो निरुंभणं यस्य या लब्धिस्तेन तया निवारणं कर्तव्यम् ॥ १५ ।

मूल—"सपायच्छित्तं निग्गंथिं निग्गंथे गिण्हमाणे वा अवलंबमाणे वा णाइक्कमइ ॥ १६ ॥

टीका—सपाय०—अस्य व्याख्या प्राग्वत्, नवरम्—सा सप्रायश्चित्ता तत्प्रथमतायां प्रथमतः प्रायश्चित्ते दीयमाने भयेन—कथमहमेतत्प्रायश्चित्तं वक्ष्यामि ? इत्येवं रूपेण विषण्णा भवेत् , यदि वा प्रायश्चित्तं वहन्ती तपसा क्लान्ता भवेत्, तत्रेयं यतना—पायच्छित्ते दिण्णे, भीताए विसज्जणं किलंताए । अणुसट्ठि वहंतीए, भएण खित्ताइ तेइच्छं ॥ प्रायश्चित्ते दत्ते यदि विभेति ततस्तस्या भीतायाः क्लान्तायाश्च विसर्जनं, प्रायश्चित्तं मुत्कलं क्रियत इत्यर्थः ॥ अथ वहन्ती क्लाम्यति ततस्तस्या वहन्त्या अनुशिष्टिर्दीयते यथा मा भैषीः बहुगतं स्तोकं तिष्ठति, यदि वा वयं साहा-

ध्यं करिष्याम इति । अथैवमनुशास्यमानाऽपि भयेन क्षिप्तचित्ता भवति ततस्तस्याः चैकित्स्यं-चिकित्सायाः कर्म कर्त्तव्यम् ॥ १६ ॥

**मूल—"भत्तपाण पडियाइक्खियं निग्गंथिं निग्गंथे गिरहमाणे वा अवलंबमाणे वा नाइक्कमइ ॥ १७ ॥**

टीका—भत्तपाण०-'अस्य व्याख्या प्राग्वत्, नवरम् भक्तं च पानं च भक्तपाने ते प्रत्याख्याते यया सा तथोक्ता । क्तान्तस्य परनिपातः सुखादिदर्शनात् ॥ १७ ॥

**मूल—"अट्ठजायं[1] निग्गंथिं निग्गंथे गिरहमाणे वा अवलंबमाणे वा णाइक्कमइ ॥ १८ ॥**

टीका—'अट्ठजा०'-अस्य व्याख्या प्राग्वत् । साम्प्रतम् अर्थजातशब्द व्युत्पत्ति-प्रतिपादनार्थमाह—अट्ठे णत्ति-अर्थेन-अर्थितया संजातं कार्यं यया । यद्वा अर्थेन-द्रव्येण जातम् उत्पन्नं कार्यं यस्याः सा अर्थजाता गमकत्वादेवमपि समासः । उपलक्षणमेतत्, तेनैवमपि व्युत्पत्तिः कर्त्तव्या-'अर्थः प्रयोजनं जातोऽस्या इति अर्थजाता । कथं पुनरस्या अवलंबनं क्रियते ? इत्याह तां पुनः प्रथमव्युत्पत्तिसूचितां संयम भावात् चाल्यमानाम्' द्वितीय तृतीय व्युत्पत्तिपक्षे तु द्रव्याऽभावेन प्रयोजनाऽनिष्पत्या वा सीदन्तीं समवलंबेत-साहाय्यकरणेन सम्यग् धारयेत्, उपलक्षणत्वाद् गृह्णीयादपि ॥ १८ ॥

**मूल—"छ कप्पस्स पलिमंथू पण्णत्ता तंजहा कुक्कुइए संजमस्स पलिमंथू १ मोहरिए सच्चवयणस्स पलिमंथू २ तिंतिणीए एसणा गोयरस्स पलिमंथू ३ चक्खूलोलूए इरियावहियाए पलिमंथू४ इच्छालोभए मुत्तिमग्गस्स पलिमंथू ५ भिज्जा[2] नियाणकरणे मोक्खमग्गस्स पलिमंथू ६ सव्वत्थ भगवया अणियाणया पसत्था ॥ १६ ॥**

टीका—छकप्पस्स०- षडिति षट्संख्या कप्प-कल्पस्य-कल्पाध्ययनोक्त साधुसमाचारस्य परिः-सर्वतो मथ्नन्ति विलोडयन्ति ( इति ) परिमन्थवः, उणादित्वात्-'उ' प्रत्ययः । पाठान्तरेण परिमन्था वा व्याघातकाः इत्यर्थः । प्रज्ञप्तास्तीर्थकरादिभिः प्रणीताः, तद्यथा कुक्कु०-कुचण्अवस्यन्दने इतिवचनात् कुत्सितम्-अप्रत्युपेक्षि-

१ अट्ठजायम्मि आ० भा० ।

२ भुज्जो भा० भा० ।

तत्त्वादिना, कुचितम्-अवस्यन्दितं यस्य स कुकुचितः स एव प्रज्ञादि दर्शनात् स्वार्थिकाण् प्रत्यये कौकुचितः, कुकुचा वा अवस्यन्दितं प्रयोजनमस्येति कौकुचिकः, ससंयमस्य पृथिव्यादिरक्षणरूपस्य परिमंथो व्याघातकारी ॥१॥ मोहरी-मुखं-प्रभूत भापणाति-शायिवदनमस्यास्तीति, मुखरः स एव मौखरिको बहुभाषी । विनयादेराकृतिगणत्वा-दिकन् प्रत्ययः । यद्वा मुखेन अरिमावहतीति व्युत्पत्त्या निपातनान्मौखरिकः, सत्यवचनस्य मृपावाद विरतेः परिमन्थुः । मौखर्ये सति मृपावाद सम्भवात् ॥ २ ॥ चक्खु:-चक्षुषा लोलःचञ्चलो यद्वा चक्षुः लोलंयस्य स चक्षुलोलः सन् स्तूप देवकुलादीनि विलोकमानो व्रजति, ईर्यागमनम्-तस्याः पन्थाः ईर्यापथः तत्रभवा या समितिः सा ऐर्यापथिकी-ईर्यासमितिः, तस्याः परिमन्थुर्भवति ॥ ३ ॥ तिंतिणि०-तिन्तिनीकः-आहाराद्यभावे खेदात्, यत्किञ्चनाभिधायी, स एषणा-उद्गमादिदोषविमुक्त-भक्तपानादिगवेषणारूपा तत्प्रधानो यो गोचरः गौरिव मध्यस्थतया भिक्षार्थंचरणं स एषणागोचरः, तस्य परिमन्थुः, सखेदो हि अनेषणीयमपि गृह्णाति इतिभावः ॥ ४ ॥ इच्छालोभ-इच्छा अभिलाषः सचासौ लोभश्च इच्छालोभः महालोभः-इत्यर्थः, यथा निद्रा निद्रा महानिद्रा इति, सचइच्छालोभः-अधिकोपकरणादि मेलन लक्षणः मुक्ति मार्गस्य-मुक्ति-र्निःपरिग्रहत्वम्, अलोभतेत्यर्थः, सैव निवृत्तिपुरस्य मार्ग इव मार्गः, तस्य परिमन्थुः ॥ ५ ॥ भिज्जत्ति 'मा लोभः तेन यत् निदान करणं देवेन्द्र चक्रवर्त्यादिविभूति प्रार्थनम्, तन्मोक्षमार्गस्य सम्यग्दर्शनादिरूपस्य परिमन्थुः । आर्तध्यान चतुर्थभेदरूपत्वात् । भिज्जाग्रहणेन यत् अलोभस्य भव निर्वेदमार्गानुसा-रितादि प्रार्थनं तत्र मोक्षमार्गस्य परिमन्थुरित्यावेदितं प्रतिपत्तव्यम् ॥ ६ ॥ ननुतीर्थ-करत्वादि प्रार्थनम्, न राज्यादिप्रार्थनवत्-दुष्टम्, अतस्तद्विषयं निदानं मोक्षस्य परि-मन्थुर्नभविष्यति ? नैवम्, यतआह-"सव्वत्थ०-इत्यादि । सर्वत्र तीर्थकरत्व-चरमदे-हत्वादि विपयेऽपि" आस्तां राज्यादौ । अनिदानता-अप्रार्थनमेव भगवता-समग्रैश्वर्या-दिमताश्रीमन्महावीरस्वामिना 'पसत्थेत्ति' प्रशंसिता-श्लाघिता, एष सूत्रार्थः ॥ १९ ॥

मूल-छव्विहाकप्पट्ठिईपन्नता, तंजहा-सामाइयसंजयकप्पट्ठिई १, छेओ-वट्ठावणिय संजयकप्पट्ठिई २, निव्विसमाणकप्पट्ठिई ३, णिव्विट्ठकाइय कप्पट्ठिई ४, जिणकप्पट्ठिई ५, थेरकप्पट्ठिई ६, त्तिबेमि ॥ २० ॥ सिरि कप्पे छट्ठोद्देसको समत्तो ।

टीका छव्विहा कप्प०,-षड्विधा-षट्प्रकारा कल्पे कल्पशास्त्रोक्त साधुसमाचारेस्थितिरवस्थानं कल्पस्थितिः, कल्पस्य वा स्थितिः-मर्यादा-कल्पस्थितिः प्रज्ञप्ता-तीर्थकरगणधरैः प्ररूपिता। तद्यथा-इति उपन्यासार्थः। सामा०-'सामायिक संयत कल्पस्थितिः समो-राग[1]द्वेषरहितः, तस्य आयः-लाभो ज्ञानादीनां प्राप्तिरित्यर्थः, समाय एव सामायिकं सर्वसावद्ययोगविरतिरूपं, तत्प्रधानाः ये संयताः-साधवः, तेषांकल्पस्थितिः सामायिक संयत कल्पस्थितिः। १। छेदो० तद्यथा-पूर्वपर्यायच्छेदेन उपस्थापनीयमारोपणीयं यत् तत्-छेदोपस्थापनीयम्, व्यक्तितो महाव्रतारोपणमित्यर्थः, तत्प्रधाना ये संयताः, तेषां कल्पस्थितिः,-छेदोपस्थानीय संयतकल्पस्थितिः। २। निव्वि०--निर्विशमानाः-परिहार विशुद्धि कल्पं वहमानाः तेषां कल्पस्थितिः निर्विशमान कल्पस्थितिः ॥ ३ ॥

णिवि०-निर्विष्टकायिका नाम-यैः परिहार विशुद्धिकं तपो व्यूढम्, निर्विष्टः आसेवितो विवक्षित चारित्रलक्षणःकायोयैस्ते निर्विष्टकायिका इति व्युत्पत्तेः, तेषां कल्पस्थितिः, निर्विष्टकायिक कल्पस्थितिः ॥४॥ जिणक०-जिनाः-गच्छनिर्गताः-साधुविशेषाः, तेषां कल्पस्थितिः-जिनकल्पस्थितिः ॥ ५ ॥ थेरक०-स्थविरा-आचार्यादयो गच्छप्रतिबद्धास्तेषां कल्पस्थितिः स्थविरकल्पस्थितिः ॥ ६ ॥ इति-अध्ययन परिसमाप्तौ। ब्रवीमीति-तीर्थंकर गणधरोपदेशेन सकलमपि प्रस्तुत शास्त्रोक्तं कल्पाऽकल्पविधिं भणामि न पुनः स्वमनीषिकया इति सूत्र संक्षेपार्थः ॥ २० ॥

इति बृहत्कल्पसूत्रस्य षष्ठ उद्देशकः समाप्तः ॥



१ रागादिदोषरहितः।

## —: परिशिष्टानुक्रमणिका :—





# प्रथमं परिशिष्टम्

## श्रीबृहत्कल्पसूत्रस्य-उद्देशकानुसारी अकारादिवर्ण क्रमेण शब्दार्थनिर्देशः

---

### अ

| उद्देश- | सूत्र- | शब्द- | अर्थ- |
|---|---|---|---|
| १ | १-३ | अभिण्णे | विधि से न काटे गए, |
| १ | ६ | अंसि अंसि | ग्राम का आधा, चौथाई भाग |
| १ | ६ ८ | अबाहिरियंसि | जो ग्राम आदि से बाहर न हो |
| १ | ६ | अंतो | भीतर |
| १ | ६ | अंतो भिक्खायरिया | भीतर गोचरी करना |
| १ | ६ | अंतोवसमाणीणं | भीतर में वसती हुई |
| १ | ११ | अभिणिवगडाए | अनेक आवरण वाले |
| १ | ११ | अभिणिदुवाराए | अनेक द्वारवाले |
| १ | ११ | अभिणिक्खमणपवेसाए | निकलने व प्रवेशकरने के दरवाजावाले |
| १ | १३ | अंतरापणंसि | दूकान के भीतर |
| १ | १४ | अंतोकिच्चा | उपाश्रय के भीतर |
| १ | १४-१५ | अंवगुयदुवारिए | खुले द्वारवाले |
| १ | १६-१७ | अंतोलित्तयं | भीतर में लीपा हुआ |
| १ | १६ | असनं | भोजन |
| १ | २१ | अचित्तकम्मे | चित्ररहित ( गृह ) |
| १ | २२-२४ | अणिस्साए | शय्यातरसे ग्रहण न किया गया |
| १ | २६ | अप्पसागारिए | गृहपति की थोड़ी वस्तु सहित |
| १ | ३५ | अहिगरणं | कलह |
| १ | ३५ | अविओसवित्ता | विना उपशमन किए |

| उद्देश– | सूत्र– | शब्द– | अर्थ– |
|---|---|---|---|
| २ | ३५ | अत्थि | है |
| १ | ३५ | अप्पणा | आत्मा से ( स्वयं ) |
| १ | ३५ | अब्भुट्ठेज्जा | आदर के लिए खड़ा होवे |
| १ | ३८ | अइक्कममाणे | उल्लंघन करता हुआ |
| १ | ३८ | अणुग्घाईयं | गुरु प्रायश्चित्त |
| १ | ३९ | अणुप्पविट्ठं | प्रवेश किए हुए |
| १ | ३९ | अणुण्णवित्ता | अनुज्ञा लेकर |
| १ | ४७ | अद्धाण गमणं | मार्ग में जाना |
| १ | ४९ | अप्प बिइयस्स | आत्मा ही है दूसरा |
| १ | ४९ | अप्प तइयस्स | आत्मा ही है तीसरा |
| १ | ५१ | अंग | चम्पा नगरी से सम्बन्धित दे: |
| २ | १-४ | अंतोवगडाए | दरवाजे के भीतर का भाग |
| २ | ४ | अहालंदमवि | थोड़ाकाल भी |
| २ | ११-१२ | अब्भावगासियंसि | मध्य की खुली जगहों में |
| २ | १३ | अवसेसे | बाकी बचे गृहों में |
| २ | १४ | अनीहरं | नहीं लेगए, नहीं निकाले गए |
| २ | १४-१५ | असंसट्ठं | न मिला हुआ |
| २ | १७-१८ | अपडिग्गहिया | नहीं ली हुयी वस्तु |
| २ | १९ | अनिज्जूढाओ | नहीं ढंकी हुई |
| २ | १९ | अविभत्ताओ | पृथक् नहीं की हुई |
| २ | १९ | अव्वोच्छिन्नाओ | निश्चित न की हुई |
| २ | १९ | अव्वोगडाओ | विशेष रीति से प्रकट न की ग |
| २ | १९ | अंसिआओ | अंशिका ( हिस्से की चीज ) |
| २ | २२-२३ | अपाडिहारिए | अप्रातिहारिक |
| ३ | ३-४ | अहिट्ठित्तए | बैठक में काम लेना |
| ३ | ४ | अणेगराइए | कई रातें ( रात्रियां ) |
| ३ | ५ | अपरिभुत्ते | उपयोग में न लाए हुए |

| उद्देश– | सूत्र– | शब्द– | अर्थ– |
|---|---|---|---|
| ३ | ४ | अप्पडिहारिए | पीछे लौटाकर न देने योग्य |
| ३ | ६ | अकसिणाइं | जो समस्त रूप नहीं हो |
| ३ | ८ | अभिण्णाइं | अखण्ड |
| ३ | १२ | अणुप्पविट्ठाए | भीतर गयी हुई |
| ३ | १४ | अहापडिग्गहिएहिं | लिए हुए वस्त्रों के अनुसार |
| ३ | १६,१७,१८ | आहाराइणियाए | गुणों की अपेक्षा छोटे बड़े के क्रम से |
| ३ | १६, २० | अंतरगिहंसि | घर के भीतर |
| ३ | २० | अठिच्चा | (नहीं ठहर कर) विना खड़े रहे |
| ३ | २२ | अपडिहट्टु | पीछे पहुँचाये विना |
| ३ | २३ | अविकरणं | यथा स्थान रखना या विखरे–को समेटना |
| ३ | २४ | अणुण्णवित्ता | विना आज्ञा लिए |
| ३ | २४ | अणुगवेसियव्वे | खोजने योग्य |
| ३ | २४ | अणुगवेस्समाणे | खोजा जाता हुआ |
| ३ | २५ | अहालंदं– | यथालंद काल प्रमाण, तीन–प्रकार का |
| ३ | २५ | अवरे | दूसरे |
| ३ | २७ | अमरपरिग्गहिएसु | देवों से गृहीत |
| ३ | २७ | अव्वावडेसु | ले जाना लाना आदि व्या–पारों से रहित |
| ३ | २७ | अव्वोगडेसु | भाग के अनुसार नहीं बांटे हुए |
| ३ | २७ | अपरपरिग्गहिएसु | दूसरों से ग्रहण नहीं किए |
| ३ | २८ | अट्ठाए | उसके लिए ( तदर्थ ) |
| ३ | २८ | अणुण्णवेयव्वे | आज्ञा लेनी चाहिए |
| ३ | २६ | अणुकुड्डेसु | भीत के समीपवर्ती प्रदेश में |

| उद्देश- | सूत्र- | शब्द- | अर्थ- |
|---|---|---|---|
| ३ | २६ | अणुचरियासु | नगर गृह और नगर कोट के— मध्य का मार्ग |
| ३ | २६ | अणुभित्तिसु | ,, ,, |
| ३ | २६ | अणुफरिहासु | परिखा-खाई के समीप |
| ३ | २६ | अणुपंथेसु | मार्ग के समीप |
| ३ | २६ | अणुमेरासु | ग्राम नगर की सीमा के समीप |
| ४ | २ | अन्नमन्नं | परस्पर |
| ४ | ३ | अणवट्ठप्पा | तत्काल व्रत में नही रखने योग्य |
| ४ | ३ | अन्नधम्मियाणं | पर धर्म वाले का |
| ४ | १० | अविओसवियपाहुडे | तीव्रतर क्रोध जिसका शान्त नहीं है |
| ४ | १० | अविणिय | अविनीत |
| ४ | १३ | अमूढे | जो मूढ़ न हो, |
| ४ | १३ | अदुट्ठे | गुरुजनों के प्रति द्वेष नहीं- करने वाला |
| ४ | १३ | अवुग्गाहिए | उलट मार्ग पर न ले जाया गया हो |
| ४ | १४ | अणुग्घाइयं | बड़ा प्रायश्चित |
| ४ | १६ | अणुप्पएज्जा | दूसरों को देवे |
| ४ | १६ | अप्पणा | आत्मा से-स्वयं |
| ४ | १७ | अद्धजोयणमेराए | आधा योजन की मर्यादा से |
| ४ | १८ | अचित्ते | निर्जीव |
| ४ | १८ | अणुवट्ठाविराए | महाव्रतों में नहीं लाए गए |
| ४ | १८ | अणेसणिज्जे | नहीं लेने योग्य-सदोष आहार |
| ४ | १८ | अणुप्पदाउं | पीछे देने के लिए |
| ४ | १९ | अकप्पट्ठियाणं | आचेलक आदि दश प्रकार के साधु |

| उद्देश– | सूत्र– | शब्द– | अर्थ– |
|---|---|---|---|
| ४ | २०, २२ | अवक्कम्म | बाहर निकलकर |
| ४ | २० | अण्णं ( अन्नं ) | दूसरे |
| ४ | २४-२८ | अनिक्खिवित्ता | विना त्याग |
| ४ | २८ | अदीवित्ता | विना समझाए |
| ४ | ३० | अकरणयाए | नहीं करने के लिए |
| ४ | ३३ | अंतोमासस्स | मास के भीतर |
| ४ | ३४ | अप्पंडेसु | अल्प अंडा वाले |
| ४ | ३४ | अप्पबीएसु | अल्प बीज वाले |
| ४ | ३४ | अप्पुस्सेसु | अल्प ओस वाले (तुषारयुक्त) |
| ४ | ३४ | अप्पहरिएसु | अल्प हरित वाले |
| ४ | ३४ | अप्पपाणेसु | अल्प प्राणिवाले |
| ४ | ३४ | अप्पुत्तिंगपणगदगमट्टिय | अल्प कीटक नगरा पांच वर्ण-का पनक आदि |
| ५ | ५ | अविओसवित्ता | शमन करके या शान्त करके |
| ५ | ६ | अह | बाद ( तदनन्तर ) |
| ५ | ६ | अणुग्गए | सूर्य के उदय न होने पर |
| ५ | ६ | अत्थमिए | सूर्य के अस्त होने पर |
| ५ | ६ | अन्नेसिं | दूसरों को |
| ५ | ६ | अइक्कमइ | उल्लंघन करता है |
| ५ | ७-८ | अणत्थमियसंकप्पे | सूर्य के रहते भोजनकी इच्छा रखने वाले अथवा पर्याप्त आहार नहीं मिलने से पुनः भोजन की इच्छा वाले |
| ५ | ११ | अंतोपडिग्गहंसि | परिग्रह के भीतर |
| ५ | १६ | अचेलियाए | वस्त्र रहित |
| ५ | १७ | अपाइयाए | पात्रों से रहित साध्वी |

| उद्देश– | सूत्र– | शब्द– | अर्थ– |
|---|---|---|---|
| ५ | २९ | अंबखुज्जियाए | आम्रकुब्जिका नाम के आसन से |
| ५ | ३७ | अन्नमन्नस्स | एक दूसरे का |
| ५ | ४० | अब्भंगित्तए | शरीर में मालिश करना |
| ५ | ४१ | अंतिए | समीप में |
| ५ | ४१ | अहालहुस्सए | प्रायश्चित्त विशेष |
| ५ | ४१ | अइक्कमेज्जा | (पाद धावन आदि कर्म से) उल्लंघन करे |
| ५ | ४२ | अन्नयरे | कोई एक |
| ६ | १ | अवयणाइं | न बोलने योग्य वचन |
| ६ | १ | अलिय वयणे | मिथ्या वचन |
| ६ | २ | अविरइय | अविरति–स्त्रीसेवा के बाद |
| ६ | २ | अपुरिसवाय | नपुंसक के समान बोलना |
| ६ | २ | अदिन्नादाण | किसी के दिए बिना लेना |
| ६ | २ | अपडिपूरेमाणे | सत्य न करता हुआ |
| ६ | ४ | अच्छिंसि | आंख में |
| ६ | ५ | अहेपायंसि | पैर के नीचे |
| ६ | ७-८-९ | अवलंबमाणे | पकड़ता हुआ (आधार देता हुआ) |
| ६ | १८ | अट्ठजायं | किसी कार्य के वशीभूत |
| ६ | १९ | अणियाणता | किसी भी फल की चाह नहीं करना |

(आ)

| | | | |
|---|---|---|---|
| १ | १ | आमे | कच्चे |
| १ | ६ | आगरंसि | आकर अर्थात् खान में |
| १ | ६ | आसमंसि | आश्रम अर्थात् साधुओं के मठ में |

| उद्देश- | सूत्र- | शब्द- | अर्थ- |
|---|---|---|---|
| १ | १३ | आवणगिहंसि | दूकान के घर में |
| १ | ३५ | आढाएज्जा | आदर करे |
| १ | ३१ | आराहणा | पालन करना |
| १ | ३८ | आवज्जइ | प्राप्त करता है |
| १ | ३८ | आगमणं | आना |
| १ | ५१ | आरिए खेत्ते | आर्यक्षेत्र |
| २ | ११ | आगमण गिहंसि | पथिकों के आने के गृह में |
| २ | १७ | आहडिया | सन्देश (उपहार) |
| ३ | २० | आइक्खित्तए | कहने को |
| ३ | २२ | आयाए | लेकर |
| ३ | २५ | आगच्छिज्जा | आवें |
| ४ | १६ | आहच्च | कदाचित्-लाकर |
| ४ | २३-२७ | आपुच्छित्ता | पूछकर |
| ४ | २३ | आयरियं | आचार्य को |
| ४ | २७ | आयरिय उवज्झायं | आचार्य और उपाध्याय को |
| ४ | ३० | आलोइज्जा | अपने अपराध को वचन से प्रकट करे |
| ४ | ३० | आहारिहं | यथा योग्य-अपराध के अनुकूल |
| ४ | ३० | आइयइ | लेता है |
| ४ | ३० | आइतव्वे | ग्रहण करने योग्य |
| ४ | ३० | आउरे | बीमार पड़ा |
| ५ | ७ | आहारं | चतुर्विध भोजन |
| ५ | ७ | आहारेमाणे | भोजन करते हुए |
| ५ | १९ | आयावणाए | आतापना से |
| ५ | १९ | आयावित्तए | आतापना लेने को |
| ५ | ३१ | आकुंचण पट्टगं | वस्त्र विशेष |
| ५ | ३२ | आसइत्तए | बैठने को |
| ५ | ३२ | आसणंसि | आसन पर |

| उद्देश– | सूत्र– | शब्द– | अर्थ– |
|---|---|---|---|
| ५ | ३७ | आइयत्तए | पीने को |
| ५ | ३७ | आइसित्तए | आचमन को |
| ५ | ३७ | आगाढ़ेसु | ज्वर आदि रोगों का |
| ५ | ३७ | आयंकेसु | आतङ्क-भय |
| ५ | ३८ | आहारस्स | चतुर्विध आहार के |
| ५ | ३९ | आलेवण जाएणं | लेप के साधनों से |
| ५ | ३९ | आलिंपित्तए | आलेपन करने को |
| ५ | ४१ | आगमेणं | अवधि आदि अतिशयज्ञान से |
| ६ | ६ | आरोहमाणि | चढ़ती हुई |

(इ)

| | | | |
|---|---|---|---|
| १ | ७ | इक्कं | एक |
| १ | २७ | इत्थी सागारिए | स्त्री गृहस्वामिनी वाले |
| १ | ३५ | इच्छाए | अपनी इच्छा से |
| २ | २४ | इमाइं | ये-आगे कहे जाने वाले |
| ३ | २४ | इह | यहां-इसमें |
| ४ | १८ | इत्थ | यहां |
| ४ | २० | इच्छेज्जा | चाहे-इच्छा करे |
| ४ | २६ | इच्छिज्जा | इच्छा करे |
| ४ | ३२ | इमाओ | ये |
| ४ | ३३ | इरावइ | नदी विशेष ( इरावती ) |
| ५ | १ | इत्थीरूवं | स्त्री स्वरूप को |
| ५ | १ | इच्चेते | ऐसे, ये, इतने |
| ५ | १३ | इंदियजायं | इन्द्रिय विशेष को |
| ६ | १६ | इरियावहियाए, | जाने आने रूप समिति के |
| ६ | १८ | इच्छालोलुए | इच्छा से लालची |

## (उ)

| उद्देश- | सूत्र- | शब्द- | अर्थ- |
|---|---|---|---|
| १ | ११ | उवत्थए | घसने को |
| १ | १४ | उवस्सए | उपाश्रय में |
| १ | १६ | उच्चारं | मलोत्सर्ग |
| १ | ३५ | उवसमियव्वं | उपशान्त करने योग्य |
| १ | ३५ | उवसमेज्जा | उपशान्त हो |
| १ | ३५ | उवसमइ | उपशान्त होता है |
| १ | ३५ | उवसमसारं | उपशम ही सार रूप है |
| १ | ३६ | उग्गहं | अपने उपयोग में लेने को |
| १ | ३६ | उवनिमंतेज्जा | लेने आदि की प्रार्थना करे |
| १ | ४१ | उत्तरेणं | उत्तर दिशा में |
| १ | ४१ | उस्संपंति | बढ़ते हों, वृद्धिगत हों |
| २ | १ | उक्खित्ताणि | फेंके हुए |
| २ | २ | उक्खित्ताइं | छींटे गए, फेंके गए |
| २ | २२ | उवगरणजाए | उपकरणजात-भण्डोपकरण आदि |
| २ | २४ | उट्टिए | ऊंट के रोमसे बने हुए |
| २ | २४ | उण्णिए | ऊनों से बने हुए |
| ३ | १० | उग्गहणंतगं | गुह्य देशको ढकने वाला वस्त्र |
| ३ | १० | उग्गह पट्टगं | अवग्रहानन्तक को ढकने वाला |
| ३ | १२ | उवज्झाए | उपाध्याय |
| ३ | २५ | उग्गहस्स | अवग्रहके-लिए हुए उपाश्रय आदि के |
| ३ | ३० | उवाइणाइ | निवास करके स्वीकार करता |
| ३ | ३० | उवाइणावित्तए | निवास से स्वीकार करने योग्य |
| ३ | ३० | उवातिणंतं | निवास पूर्वक विताते हुए |
| ४ | ५ | उवट्ठावित्तए | महाव्रतों में लाने योग्य |
| ४ | २१ | उवसंपज्जित्ता | प्राप्त करके |

| उद्देश- | सूत्र- | शब्द- | अर्थ- |
|---|---|---|---|
| ४ | २१ | उवज्झायत्तं | उपाध्याय पदको |
| ४ | २६ | उद्दिसावित्तए | दूसरे आचार्य आदि को उद्देश करना |
| ४ | २६ | उवनिक्खिवियव्वे | रखने योग्य |
| ४ | ३१ | उट्ठावणं | उठाना |
| ४ | ३२ | उत्तरित्तए | तैर कर परतीर जाने को |
| ४ | ३२ | उद्दिट्ठाओ | सामान्यतया कही गयी |
| ४ | ३५ | उप्पिसवण | ऊपर कर्ण प्रदेश तक ऊंचाई |
| ४ | ३५ | उप्पिरयणी मु० | मुट्ठी बांधकर ऊपर उठाएहाथ वाले उपाश्रयमें |
| ५ | ६ | उग्गय वित्तीए | सूर्योदय के बाद ही जीविका करने वाले |
| ५ | ६ | उग्गय मुत्तीए | सूर्योदयके बाद उपाश्रयके बाहर दिखनेवाले |
| ५ | १० | उग्गाले | खाए हुऐ पदार्थ पीछे मुंहमें लाना |
| ५ | १० | उग्गिलित्ता | पीछे कण्ठ के नीचे उतार कर |
| ५ | १२ | उसिणे | गर्म हुए |
| ५ | १६ | उड्ढं | ऊपर |
| ५ | २२ | उक्कुडुगासणियाए | उकडू आसन विशेप से बैठने वाली |
| ५ | २८ | उत्ताणियाए | पीठ के आधार से सोना |
| ६ | १ | उदीरित्ताए | पुनः उद्दीपित करने को |
| ६ | ८ | उदगंसि | जलमें |
| ६ | ९ | उरोहमाणी | नीचे उतरती हुई |
| ६ | १४ | उम्मायपत्तं | उन्माद-चित्त विकार में पड़ी |
| ६ | १४ | उवसग्गपत्तं | बाधा विशेप को पाई हुई |

(ए)

| | | | |
|---|---|---|---|
| १ | ६ | एगं | एक |
| १ | १० | एगदुवाराए | एक द्वारवाले |
| १ | १० | एगनिक्खमणपवेसाए | भीतर आने जाने के एक मार्ग वाले |
| १ | १५ | एगन्तओ | अकेलेपन से |

